Presented to the Library: Gurukul Mahavidyalaya — through the Principal Dr. Radhakissen. J. B. Ray

# BIṠHA TANTRAM.

## A MANUAL OF TOXICOLOGY.

BY

**Kaviraj Jamini Bhushan Ray Kaviratna,**

M.A., M.B., M.R.A.S.

*Ex-President, All-India Ayurvedic Conference and Ayurveda Vidyapitha.*

*( All-India Board of Ayurvedic Education )*

*Fellow of the Calcutta University, etc.*

PUBLISHED BY

THE AYURVEDIC MEDICAL COLLEGE

29, Fariapukur Street,

CALCUTTA.

1920.

**Price Rs. 2.**

# विषतन्त्रम् ।

निखिलभारतवर्षीय-सप्तम-वैद्यसम्मेलनाधिनायक-
कलिकाता-विश्वविद्यालयान्यतमसदस्या-
ष्टाङ्गायुर्व्वेद विद्यालयाध्यक्ष-

**कविराज श्रीयामिनीभूषण-राय-कविरत्न-**

**एम,-ए, एम,-बि, एम,-आर,-ए,-एस्**

इत्यनेन कृतम्

वनौषधिदर्पणकार-राजवैद्य-

**श्रीविरजाचरण-गुप्त-कविभूषणेन**

सम्पादितञ्च ।

कलिकाता २८ संख्याकफड़ियापुकुरवर्त्मस्थिता-
ष्टाङ्गायुर्व्वेद-विद्यालयतः

**कविराज श्रीसुरेन्द्रकुमार काव्यतीर्थेन**

प्रकाशितम् ।

# सूचीपत्रम् ।

# सूचीपत्रम् ।

# सूचीपत्रम् ।

# सूचीपत्रम् ।

# सूचीपत्रम् ।

# विषतन्त्रम् ।

## अथ स्थावरविषसंख्यालक्षणविज्ञानीयो नाम प्रथमोऽध्यायः ।

विषभेदं विषाधिष्ठानञ्चाह—

स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते ।
दशाधिष्ठानमाद्यन्तु द्वितीयं षोड़शाश्रयम् ॥ (१)

---

शङ्करं शङ्करं नत्वा वीक्ष्य तन्त्राणि यत्नतः ।
क्रियते बालबोधार्थ मायुर्वेदप्रकाशिका ।

(१) पुरा खल्वमृतार्थं सुरासुरैः सलिलनिधेर्विमथ्यमानात् क्रोधइव रूपवान् सत्वं समुद्बभूव कृष्णं हरिनयनं, ऊर्द्ध प्रदीप्तकेशं दंष्ट्राकरालं भैरवाऽऽरावरूपम् । तद्दर्शनादेव यतो दैवदानवा विषण्णा स्तस्माद् विषसंज्ञामवाप । तत्र सहसैव सर्व्वभूतानि निर्दग्धुकाम उपयोगविशेषैर्विषममृततां नयमानो ब्रह्मा अनुनीयौषधिषु न्यस्तवान् । ततश्च स्थावरासु मूर्त्तिष्वधिवसनात् स्थावरमित्युच्यते । जङ्गमं पुनः पृथिव्या भारावतरणार्थं सुरगादिरूपेण विष्णुर्निर्ममे इति स्थावरजङ्गमविषोत्पत्तिकथा । योनिभेदेन स्थावरमपि द्विविधं—औद्भिदं पार्थिवञ्च ।

स्थावरविषस्य दशाधिष्ठानान्याह—

मूलं पत्रं फलं पुष्पं त्वक् चीरं सार एव च।
निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः॥ (२)

अष्टौ मूलविषाण्याह—

तत्र क्लीतका-ऽश्वमार-गुञ्जा-सुगन्ध-गर्गरक-करघाट-विद्युच्छिखा-विजयानीत्यष्टौ मूलविषाणि॥ (३)

पञ्चपत्रविषाणि निर्दिशति—

विषपत्रिका-लम्बा-वरदारु-करम्भ-महाकरम्भाणि पञ्च पत्रविषाणि॥

द्वादश फलविषाण्याह—

कुमुद्वती-रेणुका-करम्भ-महाकरम्भ-कर्कोटक-रेणुक-खद्योतक-चर्म्मरी-(इ)भगन्धा-सर्पघाति-नन्दन-सारपाकाणीति द्वादश फलविषाणि॥

---

(२) धातवशब्द आकराधिष्ठानं सूचयति, तेन मनःशिलादिधात्वितरपार्थिव-विषाणां ग्रहणं भवति।

(३) मूलविषाणीति। मूलविषमित्युक्ते न तस्य पत्रफलादीनामविषत्वमवधारणीयम्, परं विषत्वं मूल एव तीव्रतरत्वेनास्तीति ज्ञेयम्। एवं पत्रफलादिविषेष्वपि जानीयात्। कुत्रापि अधिष्ठानविपर्य्यासो दृश्यते यथा मूलविषस्याश्वमारस्य पीतपुष्पस्य विषत्वं प्रकर्षेण फलेष्वेव तिष्ठति। अश्वसारः करवीरकः, स च रक्तसितपीतपुष्पभेदात्त्रिविधः सुलभः। तेषां सर्व्वेषामेव मूलानि विषदोषजनकानि। विद्युच्छिखा विश्‌लाङ्गलीति वङ्गभाषानाम, कलिहारीति हिन्दिभाषानाम। क्लीतकगुञ्जाविजयानां परिचयः सन्दिग्ध एव; क्लीतकः यष्टिमधुकार्थे, गुञ्जा रक्तिकाफलार्थे, विजया भङ्गार्थं च प्रसिद्ध एव; किन्तु तेषां मूलानां विषत्वं न सिध्यति विषादजनकत्वाभावात्; इतराण्यज्ञातानि।

पञ्चपुष्पविषाण्याह—

वेत्र-कादम्ब-वल्लिज-करम्भ महाकरम्भाणि पञ्च पुष्पविषाणि ॥

त्वक्सारनिर्य्यासविषाण्युपदिशन्नाह—

अन्त्रपाचक-कर्त्तरीय-सौरीयक करघाट-करम्भ-नन्दन-
वराटकानि सप्त त्वक्सारनिर्यासविषाणि ॥

क्षीरविषाण्याह—

कुमुदघ्नी-स्नुही-जालक्षीरीणि त्रीणि क्षीरविषाणि ॥ (४)

धातुविष आह—

फेनाश्मभस्म हरितालञ्च द्वे धातुविषे ॥

कन्दविषाण्याह—

कालकूट-वत्सनाभ-सर्षप-पालक-कर्द्दमक-वैराटक-मुस्तक-
शृङ्गीविष-प्रपुण्डरीक-मूलक-हालाहल-महाविष-
कर्कटकानीति त्रयोदश कन्दविषाणि । (५)

स्थावरविषसंख्यामुपसंहरन्नाह—

इत्येवं पञ्चपञ्चाशत् स्थावरविषाणि भवन्ति ॥

वत्सनाभादीनां कन्दविषाणां भेदमाह—

चत्वारि वत्सनाभानि मुस्तके द्वे प्रकीर्त्तिते ।
षट् चैव सर्षपाण्याहुः शेषाण्येकैकमेव तु ॥

---

(४) उक्तानि पत्रपुष्पफलत्वक्सारनिर्य्यासक्षीरविषाणि तु नाममात्रश्रुतानि अज्ञातस्वरूपानि । वेत्रस्तु ज्ञातएव, स्नुही मनसा, फेनाश्मभस्म सेँको इति वङ्गीय-भाषानाम ।

(५) त्रयोदशकन्दविषाणीति । अत्र वत्सनाभमुस्तकसर्षपाणां वक्ष्यमाणा भेदा न गणिताः । भेदगणनायां तु पञ्चविंशतिः कन्दविषाणि भवन्ति ।

धन्वन्तरिनिघण्टावुक्तं यौगिकं विषभेदमाह—

वत्सनाभः सहारिद्रः शक्तुकश्च प्रदीपनः।
सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च।
हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव:।

योगयोग्यानां कन्दविषाणां वत्नाभादीनां लक्षणे वक्तव्ये तत्र वत्सनाभस्य लक्षणमाह—

सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा।
यत् पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः॥

हारिद्रलक्षणमाह—

हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः।

शक्तुकस्यलक्षणमाह—

यद्ग्रन्थिः शक्तुकेनेव पूर्णमध्यः स शक्तुकः।

प्रदीपनस्य लक्षणमाह—

वर्णतो लोहितो यः स्याद्दीप्तिमान् दहनप्रभः।
महादाहकरः पूर्व्वैः कथितः स प्रदीपनः॥

सौराष्ट्रिकस्य लक्षणमाह—

सुराष्ट्रविषये यः स्यात् स सौराष्ट्रिक उच्यते।

शृङ्गिकस्य लक्षणमाह—

यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम्।
स शृङ्गिक इति प्रोक्तो द्रव्यतत्त्वविशारदैः॥

कालकूटस्य लक्षणमाह—

देवासुररणे देवैर्हतस्य पृथुमालिनः।
दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः

निर्य्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः ।
सो हि चैत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् ।

हालाहलस्य लक्षणमाह—

गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा ।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ।
असौ हालाहलोज्ञेयः किष्किन्धायां हिमालये ।
दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ।

ब्रह्मपुत्रस्य लक्षणमाह—

वर्णतः कपिलो यः स्यात् तथा भवति सारतः ।
ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले ॥

यौगिकानि कन्दविषाण्युक्ता वर्ज्यकन्दविषाण्याह—

कालकूटस्तथा मेषशृङ्गो दर्दुरकस्तथा ।
हालाहलश्च कर्कोटो ग्रन्थि-हारिद्रकस्तथा ।
रक्तशृङ्गी केसरश्च यमदंष्ट्रश्च पण्डितैः ।
त्याज्यानीमानि योगेषु विषाणि दश तत्त्वतः । (६)

इति स्थावरविषसंख्यालक्षणविज्ञानीयो नाम प्रथमोऽध्यायः ।

---

(६) रसेन्द्रसारसंग्रहटीकाकृत् गोपालस्तु अष्टादशविधं कन्दविषं पठति यथा—हार्दिकं, वत्सनाभं, सैकतं, शक्तुकं, मुस्तकं, सार्षपं, कौर्म्मं, शृङ्गी, कालकूटं, दर्दुरं, हालाहलं, यमदंष्ट्रा, मेषशृङ्गी, हारिद्रं, कर्कोटं, रक्तशृङ्गी, ग्रन्थिकं केशरञ्च। तेषामाद्यञ्चाष्टविधविषं यौगिकं। अन्त्यं दशविधञ्च विवर्ज्जनीय मिति।

# अथ स्थावरविष-कर्म्म-वेगविज्ञानीयो नाम द्वितीयोऽध्यायः ।

पीतं मूलविषं सामान्येन यत् करोति तदाह—

**उद्वेष्टनं मूलविषैः प्रलापो मोह एव च । (७)**

पीतं पत्रविषं यत् करोति तदाह—

**जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेयाः पत्रविषेण तु ॥**

पीतं फलविषं यत् करोति तदाह—

**मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च ।**

पीतं पुष्पविषं यत् करोति तदाह—

**भवेत् पुष्पविषैश्छर्दिराध्मानं मोह एव च ॥**

त्वक्सारनिर्य्यासविषं पीतं यत् करोति तदाह—

**त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ।**
**आस्यदौर्गन्ध्यपारुष्य-शिरोरुक्कफसंस्रवाः ॥**

पीतं क्षीरविषं यत् करोति तदाह—

**फेनागमः क्षीरविषे विड्भेदो जिह्मजिह्वता ॥**

पीतं धातुविषं यत् करोति तदाह—

**हृत्पीड़नं धातुविषैर्मूर्च्छा दाहश्च तालुनि ।**

---

(७) उद्वेष्टनं दण्डादिना पीड़ितेनेव वेदना। प्रलापोऽसम्बन्धभाषणम्। मोहो मूर्च्छा। मुष्कशोफः कोषस्फीतिः। अन्नविद्वेषः आहाराप्रवृत्तिः। आध्मानलक्षणं

नवानां मूलादिविषाणां सामान्यं धर्म्ममाह—

**प्रायेण कालघातीनि विषाण्येतानि निर्द्दिशेत्॥ (८)**

मूलादिविषानां सामान्यलक्षणमुक्त्वा कालकूटादीनां कन्दविषानां प्रत्येकं लक्षणमाह—

**कन्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि विस्तरम्।**

पीतस्य कालकूटस्य धर्म्ममाह—

**स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च॥**

वत्सनाभस्य पीतस्य धर्म्ममाह—

**ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता॥**

पीतस्य सर्षपस्य लक्षणमाह—

**सर्षपे तालुवैगुण्यमानाहो ग्रन्थिजन्म च।**

पीतस्य पालकस्य लक्षणमाह—

**ग्रीवादौर्व्वल्यवाक्सङ्गौ पालकेऽनुमताविह॥**

पीतस्य कर्द्दमाख्यस्य लक्षणमाह—

**प्रसेकः कर्द्दमाख्ये तु विड्भेदो नेत्रपीतता।**

---

यथा—साटोप मत्युग्ररुजमाध्मात मुदरं भृशम्। आध्मानमिति तं विद्याद्घोरं वातनिरोधजम्। पारुष्यं त्वचः कर्कशता। फेनागमः मुखात् फेननिर्गमः। विड्भेदो मलस्रावः। जिह्मजिह्मता जिह्वायाः वक्रत्वं। हृत्पीड़नं हृदि व्यथा।

(८) कालघातीनि उपयोगदिवसादन्यो दिवसपक्षमासादिः कालः, तेषु घ्नन्तीत्येवं शीलानि। स्पर्शाज्ञानं स्पर्शशक्तिहानिः। स्तम्भः जड़ता शरीरस्य चित्तस्य च। ग्रीवास्तम्भः ग्रीवालाड़नाक्षमता। तालुवैगुण्यं तालुविद्रधिस्तालु शोषो वा। आनाहः मलमूत्राप्रवृत्तिः उदरे बन्धनवत् पीड़ा च। ग्रन्थिजन्म कुक्षिवङ्क्षणकर्णमूलादिगतः शोथः। ग्रीवादौर्व्वल्यं तेन शिरोधारणकृच्छ्रत्वं जायते। वाक्सङ्गः वाग्रोधः। प्रसेकः मुखनासास्रावः। अङ्गदुःखं अङ्गपीड़ा।

पीतस्य वैराटकस्य लक्षणमाह—

वैराटकेनाङ्गदुःखं शिरोरोगश्च जायते ॥

पीतस्य मुस्तकस्य लक्षणमाह—

गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु ।

पीतस्य शृङ्गीविषस्य लक्षणमाह—

शृङ्गीविषेणाङ्गसाद-दाहोदरविवृद्धयः ॥

पीतं पुण्डरीकं यत् करोति तदाह—

पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे ।

पीतं मूलकं यत् करोति तदाह—

वैवर्ण्यं मूलकैश्छर्दि र्हिक्काशोफप्रमूढ़ताः ॥

पीतं हालाहलं महाविषञ्च यत् करोति तदाह—

चिरेणोच्छ्वसिति श्यावो नरो हालाहलेन वै ।

महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् । (१०)

पीतस्य कर्कटकस्य लक्षणमाह—

कर्कटेनोत्पतत्यूर्द्ध्वं हसन् दन्तान् दशत्यपि ॥

भक्षितं हरितालं यत्करोति तदाह—

भक्षिते हरिताले तु हृदि दाहो रसाग्रहः ।

आनाहोऽम्लस्य वमनं पीतहारिद्रविट्स्रुतिः ।

तथा मण्डलिसर्पोक्तविकाराः ।

---

(१०) उदरविवृद्धिः उदरस्य वृद्धत्वम् । वैवर्ण्यं गात्र विवर्णता । छर्दिः वमनं । प्रमूढ़ता प्रकर्षेणाचैतन्यता । चिरेणोच्छ्वसिति चिरात्स्वित श्वासं गृह्णाति । श्यावः शुक्लानुविद्धकृष्णवर्णः ।

अचितं धुस्तूरकं यत् करोति तदाह—

धस्तूरकोपयोगेन सर्व्वं पश्यति पीतकम् ।
कम्पलालामदच्छर्द्दिस्मृतिभ्रंशभ्रमान्वितः

कन्दजानां विषाणां दशगुणानाह—

कन्दजान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश ।
सर्व्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः ॥
रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च ।
विकाशि विशदञ्चैव लघ्वपाकि च तत् स्मृतम् ॥ (११)

रूक्षत्वादयोगुणा यत् कुर्व्वन्ति तदाह—

तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम् ।
मानसं मोहयेत् तैक्ष्ण्यादङ्गबन्धांश्छिनत्त्यपि ॥
शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च ।
आशुत्वादाशु तद्धन्ति व्यवायात् प्रकृतिं भजेत् ॥
क्षपयेच्च विकाशित्वाद्दोषान् धातुमलानपि ।
वैशद्यादतिरिच्येत दुश्चिकित्स्यञ्च लाघवात् ।
दुर्ज्जरञ्चाविपाकित्वात् तस्मात् क्लेशयते चिरम् ॥

---

(११) 'रूक्षः' स्निग्धविपरीतः विशेषात् स्तम्भनः। 'उष्णः' शीतविपरीतः विशेषात् पाचनः। 'तीक्ष्णः' दाहपाककरः विशेषात् लालादिस्रावकारी। 'सूक्ष्म' सूक्ष्मत्व सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः। 'आशुकारी' आशुकारी तथाऽऽशुत्वात् धावत्यम्भसि तैलवत्। 'व्यावायी' व्यवायि चाखिलं देहं व्याप्य पाकाय कल्पते। 'विकाशी' विकाशी विकसन्नेवं धातुबन्धान् विमोचयेत्। 'विशदः' पिच्छिलविपरीतः विशेषतः क्लेदाचूषणरोपणः। 'लघुः' गुरु विपरीतः विशेषात् लेखनः रोपणश्च। अविपाकि दुर्ज्जरम।

भक्षितं कोरदूषमदनं यत् करोति तदाह—

कोरदूषमदनकैः प्रायो धत्तूरवद्गदाः।
उन्मादोऽक्षिविनाशश्च।

भक्षितस्य स्थावरविषस्य सप्तवेगलक्षणमाह—

स्थावरस्योपयुक्तस्य वेगे तु प्रथमे नृणाम्। (१२)
श्यावा जिह्वा भवेत् स्तब्धा मूर्च्छा श्वासश्च जायते॥
द्वितीये वेपथुः स्वेदो दाहः कण्डू रुजस्तथा।
विषमामाशयप्राप्तं कुरुते हृदि वेदनाम्॥
तालुशोषं तृतीये तु शूलञ्चामाशये भृशम्।
दुर्व्वर्णे हरिते शूने जायेते चास्य लोचने॥
पक्वाशयगते तोदो हिक्का कासोऽन्त्रकूजनम्।
चतुर्थे जायते वेगे शिरसश्चातिगौरवम्॥
कफप्रसेको वैवर्ण्यं पर्व्वभेदश्च पञ्चमे।
सर्व्वदोषप्रकोपश्च पक्वाधाने च वेदना॥
षष्ठे प्रज्ञाप्रणाशश्च भृशं वाप्यतिसार्य्यते।
स्कन्धपृष्ठकटीभङ्गः सन्निरोधश्च सप्तमे॥

इति स्थावरविषकर्म्म वेग विज्ञानीयो नाम द्वितीयोऽध्यायः।

---

(१२) उपयुक्तस्य भुक्तस्य। स्तब्धा चालनाक्षमा। तालुशोष इति—तल्लक्षणं यथा—शोषोऽत्यर्थं दीर्य्यते वापि तालु श्वासो वातात् तालुशोषोऽयमुक्तः। दुर्व्वर्णे इति। लोचनस्य दुर्व्वर्णत्वं वर्णदर्शनविपर्य्यासः। शूनः स्फीत इत्यर्थः। पर्व्वभेदः अस्थिपर्व्वसु भेदवत् पीड़ा। प्रज्ञाप्रणाशः ज्ञानहानिः। स्कन्धपृष्ठेति। स्कन्धादिषु भङ्गवत् पीड़ा। सन्निरोधः सम्यक् निरोधः उच्छ्वासस्येति शेषः।

## अथ सर्पजन्म-संख्या-विभाग-परिज्ञान-जाति-विज्ञानीयो नाम तृतीयोऽध्यायः ।

सर्पजन्माण्डदर्शनेन च पुंस्त्वादिज्ञानमाह—

प्रायेणर्त्तुमती मासं जैष्ठं तिष्ठति पन्नगी । (१३)
आषाढ़े सर्पसंयोगादण्डानां मासि कार्त्तिके ।
द्वे शते विंशती द्वे च सासूते तत्रजायते ।
कर्कतनसवर्णोऽण्डे समुद्भिन्ने भुजङ्गमः ।
दीर्घलोहितराजिभिश्चित्रे योषिन्नपुंसकम् ।
शिरीषपुष्प सदृशी —

भौनानां सर्पाणां संख्यामाह—

ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान् ।
तेषां संख्यां प्रवक्ष्यामि यथावदनुपूर्व्वशः ॥
अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा ।
दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैव च ।
निर्व्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः ॥
दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः ।

---

(१३) ज्यैष्ठमासि सर्पी ऋतुमती भवति। आषाढ़े च तस्या गर्भाधानं, कार्त्तिके सा प्रसूते अण्डान्। कर्कतनं मरकतमणिः तत्सवर्णे हरिद्वर्णे इत्यर्थः हरिद्वर्णादण्डात् पुंसर्पः, दीर्घलोहितरेखाभिश्चित्रितादण्डात् स्त्रीसर्पः शिरीषपुष्पवर्णसदृशाच्चाण्डात् नपुंसकसर्पो जायते।

दर्वीकरादीना प्रत्येकं संख्यामाह तेष्विति—

तेषु दर्व्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः ॥
द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश ।
निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा ।
वैकरञ्जोद्भवाः सप्त चित्रा मण्डलिराजिलाः ॥

दर्व्वीकराणां नामान्याह—

तत्र दर्व्वीकराः—कृष्णसर्पो महाकृष्णः, कृष्णोदरः, श्वेतकपोतो, महाकपोतो, बलाहको, महासर्पः, शङ्खपालो, लोहिताक्षो, गवेधुकः, परिसर्पः, खण्डफणः, ककुदः, पद्मो, महापद्मो दर्भपुष्पो, दधिमुखः, पुण्डरीको, भ्रुकुटीमुखो, विष्किरः, पुष्पाभिकीर्णो, गिरिसर्पः, ऋजुसर्पः, श्वेतोदरो, महाशिरा, अलगर्द्द, आशीविष इति ॥

मण्डलिनां नामान्याह—

मण्डलिनस्तु—आदर्शमण्डलः, श्वेतमण्डलो, रक्तमण्डल, श्चित्रमण्डलः, पृषतो, रोध्रपुष्पो, मिलिन्दको, गोनसो, वृद्धगोनसः, पनसो, महापनसो, वेणुपत्रकः, शिशुको, मदनः, पालिन्दिरः, पिङ्गलातन्तुकः, पुष्पपाण्डुः, षड़ङ्गोऽग्निको, वभ्रुः, कषायः, कलुषः, पारावतो, हस्ताभरणश्चित्रक, एणीपद इति ॥

राजिमतां नामान्याह—

राजिमन्तस्तु—पुण्डरीको, राजिचित्रो, ऽङ्गुलराजि, विन्दुराजिः, कर्द्दमक, तृणशोषकः, सर्षपकः, श्वेतहनु, दर्भपुष्प, चक्रको, गोधूमकः, किक्किसाद इति ॥

निर्विषानां नामान्याह—

निर्व्विषास्तु—गलगोल्ली, शूकपत्रोऽजगरो, दिव्यको, वर्षाह्निकः, पुष्पशकली, ज्योतीरथः, क्षीरिका, पुष्पको, ऽहिपताको, ऽन्धाहिको, गौराहिको, वृक्षेशय इति ॥

पृथग्जातीयसर्पिण्यां पृथग्जातीयसर्पाभ्यां जाता, वैकरञ्जास्तेषां नामोत्पत्ती आह—

वैकरञ्जास्तु त्रयाणां दर्व्वीकरादीनां व्यतिकराज्जाताः। तद्यथा—माकुलिः पोटगलः स्निग्धराजिरिति।

तज्जातमेव व्यतिकरं विवृण्वन्नाह—

अत्र कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः। राजिलेन गोनस्यां वैपरीत्येन वा जातः पोटगलः। कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति। (१४)

वैकरञ्जेषु मण्डलिराजिलयोर्विभागं दर्शयति त्रयाणामिति—

त्रयाणां वैकरञ्जानां पुनर्दिव्येलक-रोध्रपुष्पक-राजिचित्रक-पोटगलः पुष्पाभिकीर्णो दर्भपुष्पो वेल्लितकः सप्त। तेषामाद्यास्त्रयो राजिलवत्, शेषा मण्डलिवत्। एवमेतेषां सर्पाणामशीतिर्व्याख्याता ॥ (१५)

---

(१४) तत्र कृष्णसर्पेणेत्यादि।—वैपरीत्येन वेति गोनसेन पुंसा कृष्णसर्पिण्यां स्त्रियामित्यर्थः। राजिलेनेत्यादि। वैपरीत्येन वेति गोनसेन पुंसा राजिलायां स्त्रियामित्यर्थः। कृष्णसर्पेणेत्यादि। वैपरीत्येन वेति राजिमता पुंसा कृष्णसर्पिण्यां स्त्रियामित्यर्थः। एवं वर्णशङ्कराणां माकुलिपोटगलस्निग्धराजीनां सर्पाणां पितृमातृनिर्द्देशो व्याख्यातः।

(१५) वैकरञ्जेभ्यस्त्रिभ्यः (माकुलिपोटगलस्निग्धराजिभ्यः) जातानां दिव्येलकप्रभृतीनां सप्तानां विषं केषामनुयायि भवतीतिदर्शयन्नाह त्रयाणामिति।

दर्व्वीकरपरिज्ञानायाह—

रथाङ्गलाङ्गलच्छत्र-स्वस्तिकाङ्कुशधारिणः ।
ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिणः ॥

राजिमत्परिज्ञानार्थमाह—

मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ।
ज्ञेया मण्डलिनः सर्पा ज्वलनार्कसमप्रभाः ॥
स्निग्धा विविधवर्णाभिस्तिर्य्यगूर्द्धञ्च राजिभिः ।
चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृताः ॥

स्त्रीपुंनपुंसकानां आकृतिविशिष्टत्व माह—

तत्र महानेत्रजिह्वास्यशिरसः पुमांसः । सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः । उभयलक्षणा मन्दविषा अक्रोधा नपुंसका इति ॥

दर्व्वीकरादीनां विचरणकालमाह—

रजन्याः पश्चिमे यामे सर्पाश्चित्रास्चरन्ति हि ।
शेषेयूक्ता मण्डलिनो दिवा दर्व्वीकराः स्मृताः ॥
पूर्व्वमध्यापराह्णेषु चरन्ति ब्राह्मणादयः ।

सर्पानां ब्राह्मणादिजातिपरिज्ञानार्थमाह—

मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः ।
सुगन्धयः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः ॥
क्षत्रियाः स्निग्धवर्णास्तु पन्नगा भृशकोपनाः ।
सूर्य्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम् ॥

कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा ।
धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः ॥
महिषद्वीपिवर्णाभास्तथैव परुषत्वचः ।
भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्त्तिताः ॥

वृद्धवाग्भटे चोक्तम्—

ब्राह्मणाः क्रोधना नीलकपिलाः श्वेतलोहिताः ।
रक्तास्याः पिङ्गनयनाः मध्यदेशविचारिणः ।
भोगि यज्ञोपवीतानि द्विजचिह्नोपचिह्निताः ॥
बिल्वपुष्पहिमोशीरपद्मगुग्गुलुगन्धयः ।
क्षत्रिया मानिनो घोरा रक्ताक्षा भृशकोपनाः ।
पक्वजाम्बवखर्ज्जूरद्राक्षाभिन्नाञ्जनप्रभाः ।
भोगेऽर्द्धचन्द्रश्रीवत्सशङ्खचक्रहलाङ्किताः ।
जातीचम्पकपुन्नागपद्मजोङ्गकगन्धयः ।
वैश्याः पारावताभासा वज्रगोमेदसप्रभाः ।
विन्दुमण्डलचित्राङ्गा धूमपाटललोहिताः ।
वस्राकुष्ठाविकक्षीरसर्पिषां गन्धतः समाः ।
शूद्राः सवर्णा गोधूममाहिषद्विपकर्द्दमैः ।
विन्दुरेखाचिता रुक्षाः सुराशोणितगन्धयः ।

इति सर्पसंख्याविभागपरिज्ञानजातिविज्ञानीयो नाम
तृतीयोऽध्यायः ।

# अथ जङ्गमविषाधिष्ठानविज्ञानीयो नाम चतुर्थोऽध्यायः ।

जङ्गमविषस्याधिष्ठानान्याह—

जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोड़श ।
समासेन मया यानि विस्तरस्तेषु वक्ष्यते ॥

जङ्गमानां येभ्यो विषसंक्रमणं भवति विस्तरेण तान्याह—

तत्र दृष्टि-निःश्वास-दंष्ट्रा-नख-मूत्र पुरीष शुक्र लाला-(आ) र्त्तव-मुख-सन्दंश-विशर्द्धित-गुदास्थि पित्त शूक शवानीति ॥ (१६)

तत्र दृष्टिनिश्वासविषास्तु दिव्याः सर्पाः । भौमास्तु दंष्ट्राविषाः ।

दंष्ट्राणां उत्पत्तिसंख्याविषाशयलक्षणाह—

दंष्ट्राः सर्पस्य सप्तमे ।
चतस्रः संभवन्त्यह्नि विषं तासु चतुर्दशे ।
वामाधोऽसिता पीता तदूर्ध्वा दक्षिणात्वधः ।
रक्ता श्यावोत्तरैकद्वित्रिचतुर्विषविन्दुकाः ।

---

(१६) तान्येवाधिष्ठानान्याह—तत्र दृष्टिनिःश्वासेत्यादि । निःश्वासः फुत्कारः । विशर्धितं पायुकृतःकुत्सितशब्दः । शूकं कीटलोम । कीटानां सर्पाणाञ्च विगतप्राणानां देहः शवः । वृद्धवाग्भटश्च विशर्धितगुदस्थाने स्पर्शशोणिते पठति ।

ताः क्रमाद् मुद्गमात्राऽनुविन्दुरेखा तु भोगिनाम् ।
व्यधकल्पेन चान्येषां विद्याद् दंष्ट्रास्तथाऽपराः ।
चत्वारिंशद् भुजङ्गस्य निर्विषाश्चतुरुत्तराः । (१७)

येषां दंष्ट्रानखेभ्यो विषसंक्रमणं भवति तानाह—

मार्ज्जार-श्व-वानर-मकर-मण्डूक-पाकमत्स्य-गोधा-शम्बूक-प्रचालक-गृहगोधिका-चतुष्पादकीटा-स्तथान्ये दंष्ट्रानख-विषाः ॥ (१८)

---

(१७) दिव्येति। दिवि भवाः दिव्याः। भूमौ भवाः भौमाः। तत्रेति। एतच्च-प्रायिकं सर्व्वेऽपि सर्पा दंशायतनविषाः। जन्मतः सप्तम-दिवसे सर्पस्य चतस्रः दंष्ट्राः जायन्ते। तासु चतसृषु दंष्ट्रासु, चतुर्द्दशे दिने जन्मत इति शेषः विषाविर्भावो भवति। चतसृषु दंष्ट्रासु अधःपंक्तिगता वामा दंष्ट्रा वर्णतः कृष्णा। ऊर्द्ध्वपंक्तिगता वामा दंष्ट्रा पीतवर्णा। अधःपंक्तिगता दक्षिणा दंष्ट्रा रक्तवर्णा। ऊर्द्ध्वपंक्तिगता दक्षिणा दंष्ट्रा श्यामवर्णा। तासां काभ्य कियत् विषं निःसरतीत्याकाङ्क्षायामाह एकद्विवीति। एतासु चतसृषु दंष्ट्रासु अधःपंक्तिगतायाः वाम-दंष्ट्रायाः विन्दुरेकः, ऊर्द्ध्वपंक्तिस्थितायाः वाम-दंष्ट्रायाः बिन्दू द्वौ, अधःपंक्तिगतायाः दक्षिण-दंष्ट्रायाः विन्दवस्त्रयः, ऊर्द्ध्वपंक्तिस्थितायाः दक्षिणदंष्ट्रायाः विन्दवश्चत्वारः विषस्य निःसरन्ति। अन्येषां वधार्थं तासु दंष्ट्रासु मुद्ग-प्रमाणा विन्दुरेखास्ति विषनिषेकार्थमित्यर्थः। चतसृभ्यः विषदंष्ट्राभ्यः अधिकाश्चत्वारिंशत् निर्विषा दंष्टाः सन्ति भुजङ्गस्य।

(१८) मार्ज्जारेति। मार्ज्जारोऽत्रैव व्याला व्याघ्रादयोऽभिप्रेताः। मकरो जलजन्तुरित्येके। अन्ये आग्नेयकीटपठितं मकराकारत्वेन मकरं। अन्ये मकरं कर्कट-वृश्चिकं। पाकमत्स्योऽपि आग्नेयेष्वेव पठितः कीटविशेषः। गोधा पञ्चनखी सौम्यकीटपठिता। गोधेति। कृष्णशब्दस्य लोपात् कृष्णगोधा इत्यन्ये। प्रचालकं सौम्यकीटपठितं कीटविशेषमाहुः। गृहगोधिका कोष्ठागारी कीटगृहकारिका। चतु-ष्पादकीटाः प्रतिसूर्य्यकादयः, तथा अन्ये मशकमक्षिकादयश्च कीटाः। (निः सं)

येषां मलमूत्राभ्यां विषसंक्रमणं भवति तानाह—

चिपिट-पिच्चटक-कषायवासिक-सर्षपवासिक-तोटक-वर्च्च:कीट-कौण्डिन्यका: शकृन्मूत्रविषा: ॥

मूषिकाणां लूतानाञ्च विषाधिष्ठानान्याह—

मूषिका: शुक्रविषा:। लूताश्च लालामूत्रपुरीषमुखसन्दंशनखशुक्रार्त्तवविषा: ॥

वृश्चिक-विश्वम्भर-वरटी-राजिवमत्स्योच्चिटिङ्गा: समुद्रवृश्चिकाश्चाऽऽरविषा: ॥ (१९)

विशर्द्धितमूत्रपुरीषविषानाह—

चित्रशिर:-सरावकुर्द्दित-शतदारुका-(अ)रिमेदक-शारिकामुखा मुखसन्दंशविशर्द्धितमूत्रपुरीषविषा:। (क)

मुखसन्दंशविषानाह—

मक्षिका-कणभ-जलायुका मुखसन्दंशविषा: ॥

अस्थिविषानाह—

विषहतास्थि-सर्पकण्टक-वरटीमत्स्यास्थि चेत्यस्थिविषाणि।

---

(१९) चिपिटपिच्चिकटेत्यादि।—एते कीटविशेषा देशान्तरे लोकतो ज्ञेया:। वृश्चिकेत्यादि। आरशब्देनात्र वृश्चिकलाङ्गूलादिस्थित: कण्टको भन्यते, तस्य च स्थूलयूकरूपत्वात् यूकाग्रहणेनैव ग्रहणं, अतएव दृष्टिनि:श्वासेत्यादिसूत्रे पृथक् नोदाहृतं आरग्रहणम्। गयदासस्तु 'आलालविषा' इति पठति व्याख्यानयति च आलालं लाला।

(क) चित्रशिर इत्यादि। वरटीमत्स्ययो: स्थाने केचिदेकमेव वरटीमत्स्यं पठन्ति। गतासवो गतप्राणा:। (नि: सं)

पित्तविषानाह—

शकुलीमत्स्य-रक्तराजी-चरकीमत्स्याश्च पित्तविषाः ॥

शूकतुण्डविषानाह—

सूक्ष्मतुण्डो-(उ)च्चिटिङ्ग-वरटी-शतपदी-शूकवल्लभिका भृङ्गी-भ्रमराः शूकतुण्डविषाः ॥

अनुक्तानां विषाधिष्ठानमाह—

कीटसर्पदेहा गतासवः शस्त्रविषाः । शेषास्त्वनुक्ता मुख-सन्दंशविषेष्वेव गणयितव्याः ॥

इति जङ्गमविषाधिष्ठानविज्ञानीयो नाम चतुर्थोऽध्यायः ।

---

## सर्पदंश-दष्टलक्षणविज्ञानीयो नाम पञ्चमोऽध्यायः ।

दंशस्य कारणान्याह—

पदाभिमृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा । (२०)
ते दशन्ति महाक्रोधाः—

---

(२०) पदाभिमृष्टेति । पदाभिमृष्टाश्चरणाहताः । दुष्टाः स्वभाविनेत्यर्थः । क्रुद्धाः कोपान्विताः । ग्रासार्थिनः क्षुधिताः । अपि शब्दः अनुक्तसमुच्चये तेन भया-सन्नभीतविषाधिकादयो ग्राह्याः ।

दंशनवैविध्यं दर्शयति—

तद्धि त्रिविधमुच्यते ॥
सर्पितं रदितं वापि तृतीयमथ निर्विषम् ।
सर्पाङ्गाभिहतं केचिदिच्छन्ति खलु तद्विदः ॥

सर्पिताख्यस्य दंशस्य लक्षणमाह—

पदानि यत्र दन्तानामेकं द्वे वा बहूनि च । (२१)
निमग्नान्यल्परक्तानि यान्युद्वृत्य करोति हि ॥
चञ्चुमालकयुक्तानि वैकृत्यकरणानि च ।
सङ्क्षिप्तानि सशोफानि विद्यात् तत् सर्पितं भिषक् ॥

रदिताख्यस्य दंशस्य लक्षणमाह—

राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा ।
विज्ञेयं रदितं त्वत्तु ज्ञेयमल्पविषञ्च तत् ॥

---

(२१) पदानि दंष्ट्रार्पणस्थानानि । निमग्नानि अन्तः- प्रविष्टानि तथापि अल्परक्तानि निषिक्तविषप्रभावात् । अथ उद्वृत्येति अप्राक्काले कृत्वा तेन दन्तानां यानि पदानि कृत्वा उद्वृत्य सर्पस्तिष्ठतीत्यर्थः । यत्र दंशन समकालमेव सर्पाः पार्श्वोद्वृर्णितफणा भवन्ति तत्र ते उद्वृत्ता इति कथ्यन्ते । उद्वृत्तत्वेन वडिशाकाराभ्य दंष्ट्राभ्यः सुखं भूरि च विषनिषेको भवति ; अतःसर्पिताख्यस्य दंशस्यासाध्यत्वम् । चञ्चुमालकयुक्तानीति उपरि पिड़कासदृशैराचितानीत्यर्थः । गयीतु चञ्चुमालका सर्पदष्टस्थान-पार्श्वे बटरोहाग्रतुल्या विषोत्पन्ना अङ्कुरा भवन्तीति व्याख्यानयति । वैकृत्यकराणि विकारभावविधायकानि । संक्षिप्तानि सूक्ष्मानि । सर्पितं अतिगभीरं अतएव वैकृत्यकराणि । रदितं उत्तानं अतएवाल्पविषं । प्रकृतिस्थस्येति न किञ्चिदपि विषविकारैर्युक्तस्य ।

निर्व्विषाख्यस्य दंशस्य लक्षणमाह—

अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः।
पदं पदानि वा विद्यादविषं तच्चिकित्सकः॥

तन्त्रान्तरोक्तं तुण्डाहतादिदंशलक्षणमाह—

यत्र लालापरिक्लेदमात्रं गात्रेषु दृश्यते। (२२)
नतु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत्।
एकं दंष्ट्रापदं द्वे वा व्यालीढ़ाख्यमशोणितम्।
दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि च।
मांसच्छेदादविच्छिन्नरक्तवाहीनि दंष्ट्रकम्।
दंष्ट्रापदानि चत्वारि तद्वद्दंष्ट्रानिपीड़ितम्।
निर्विषं द्वयमप्याद्यमसाध्यं पश्चिमं वदेत्।

---

(२२) यत्रेति। यस्मिन्नङ्गे लालाकृतं मालिन्यमेव दृश्यते न तु सर्पदंष्ट्राकृतं दंशं तत्तुण्डाहतं दंशमाहुः। एकं दंष्ट्रापदं द्वे वा दंष्ट्रापदे ईषद्रक्तान्विते तद्व्यालीढ़संज्ञम्। द्वे दंष्ट्रापदे सरक्ते व्यालुप्तसंज्ञं विद्यात्। त्रीणि दंष्ट्रापदाणि मांसच्छेदात् सन्ततरक्तवाहीनि द्रंष्ट्रकसंज्ञं विद्यात्। तद्वदिति दंष्ट्रकवत्। दंष्ट्रकसंज्ञे दंशे यदि दंष्ट्रापदानि चत्वारि स्युस्तदा दंष्ट्रानिपीड़ित-संज्ञं विद्यात्। एषु दंशेषु आद्यं द्वयं निर्विषं पश्चिमं दंष्ट्रानिपीड़िताख्यं असाध्यं जानीयात्। व्यालुप्तदंशस्य कष्टसाध्यत्वमर्थादवगम्यते। अस्मिन् वाग्भटवचने असाध्य-दंश-लक्षणेषु यत् सन्ततरक्तवाहित्व मुक्तम् तच्च चिन्त्यं स्वोक्तिविरोधात्। यतः असाध्यलक्षणे तेनैवोक्तं "रक्तं खेभ्यः समस्तेभ्यो वर्त्तते न तु दंशत" इति। सुश्रुते तु सर्पिताख्यस्य असाध्यदंशस्य लक्षणे अल्परक्तत्वं पठितम्। दंशाद् भूरिशोणितस्रावस्तु नासाध्यलक्षणं नापिकृच्छ्रसाध्यलक्षणमिति वृद्धविषवैद्याः।

सर्पावस्थाभेदेन दंशस्याल्पाधिकविषत्वमाह—

व्याधितोद्विग्नदष्टानि ज्ञेयान्यल्पविषाणि च।
तथातिवृद्धबालाभिदष्टमल्पविषं स्मृतम्॥

लक्षणभेदेन दंशस्य सविषत्वं निर्विषत्वञ्चाह—

दंशस्तु सविषः सर्वः सशोफवेदनान्वितः।
तुद्यते ग्रथितः किञ्चित् कण्डूमान् दह्यते भृशम्।
निर्विषो विपरीतोऽस्मात्। (२३)

दंष्ट्रासु विषसञ्चयं सहेतुकं मुक्त्वा तन्निषेकव्यापारमाह—

शुक्रवत् सर्व्वसर्पाणां विषं सर्व्वशरीरगम्।
क्रुद्धानामेति चाङ्गेभ्यः शुक्रं निर्म्मन्थनादिव॥
तेषां वड़िशवद्दंष्ट्रास्तासु सज्जति चागतम्। (क)
अनुद्वृत्ता विषं तस्मान्न मुञ्चन्ति च भोगिनः॥

जातिभेदेन सर्पाणां दंशनकालदोषोद्रेकाहारविशेषानाह—

अस्तङ्गते रवौ शूद्रा दशन्ति ब्राह्मणाः पुनः। (२३)

---

(२३) अस्मात् विपरीत इति। शोफवेदनाग्रन्थिकण्डूदाहवर्ज्जितं दंशं निर्व्विषं वदेत्।

(क) दंशस्य सविषत्वं विषनिषेकमूलमेव ; अतोविषमोचनप्रकारं दर्शयति तेषां वड़िशवदिति। बड़िशं मत्स्यबन्धनयन्त्रं, बड़िशाकारत्वात् दंष्ट्राणां वक्राग्रत्वं। चतस्रः विषदंष्ट्राः प्रागुक्ताः। उद्वृत्ताः पार्श्वोद्घूर्णितफणाः। दंशनसमकालमेव हिंस्राः सर्पाः प्रायः पार्श्वोत्क्षिप्तभोगाः भूत्वा विषंमुञ्चन्ति। तथा सति दंष्ट्राणामधोमुखतया विषनिषेकः साधु निर्व्वहति।

(२४) अस्तं गते सवितरि शूद्राः सर्पाः दशन्ति। ब्राह्मणाः सर्पाः दक्षिणे, क्षत्रिया पार्श्वे, वैश्याः वामतः शूद्राः पृष्ठःस्थित्वा दशन्ति। ब्राह्मणसर्पानां दंशनेन

संस्थिता दक्षिणे पार्श्वे क्षत्रिया वामतोविशः।
शूद्रास्तु पृष्ठतो विप्रास्त्रीनप्यनिलपूर्वकान्।
कोपयन्ति क्रमाद्दोषां स्त्रींस्त्रयः क्षत्रियादयः।
दंशा अप्यङ्गगन्धेन ज्ञेया स्तेषां यथायथम्।
वायुमूषकमण्डूकसर्व्वभक्षाः क्रमेण तु।

तत्र सर्व्वेषां सर्पाणां सामान्यत एव दष्टलक्षणं वक्ष्यामः। किं कारणं विषं हि निशितनिस्त्रिंशाशनिहुतवह-देश्यमाशुकारि मुहूर्त्तमप्युपेक्षितमातुरमतिपातयति न चावकाशोऽस्ति वाक्समूहमनुसर्त्तुम्॥ (२५)

प्रतिसर्पदष्टलक्षणाकरणे हेतुमाह—

प्रत्येकमपि दष्टलक्षणेऽभिहिते सर्वत्र त्रैविध्यं भवति, तस्मात् त्रैविध्यमेव वक्ष्यामः। एतद्ध्यातुरहितमसम्मोहकरञ्च। अपि चात्रैव सर्व्वसर्पव्यञ्जनावरोधः॥ (२६)

---

वातादिदोषत्रयमेव कुप्यति। क्षत्रियवैश्यशूद्राः सर्पाः क्रमेन वातपित्तकफं कोपयन्ति। ब्राह्मणादिनां सर्पानां शरीरगन्धः प्रागुक्तः, तेषां दंशमपि तत् तदङ्गगन्धविशेषैर्जानीयात्। आहारस्तु ब्राह्मणानां वायुः, क्षत्रियानां मूषिकः, वैश्यानां मण्डूकः शूद्रानां सर्व्वमिति।

(२५) निशितः तीक्ष्णः, निस्त्रिंशः खड्गः, अशनिः वज्रं, हुतवहः अग्निः, देश्यं सदृशं, अतिपातयति सत्वरं विनाशयति।

(२६) सम्मोहकरं भ्रान्तिजनकं। अपिचात्रैवेत्यादि। अत्र त्रैविध्ये। सर्व्वसर्पव्यञ्जनावरोधः सकलसर्पदष्टलक्षणनिरोधः।

दर्व्वीकरदष्टलक्षणमाह—

तत्र दर्व्वीकरविषेण—त्वङ्नयननखदशनवदनमूत्रपुरीषदंश-कृष्णत्वं, रौच्यं, शिरसो गौरवं, सन्धिवेदना, कटीपृष्ठग्रीवा-दौर्व्वल्यं, जृम्भणं, वेपथुः, स्वरावसादो, घुर्घुरको, जड़ता, शुष्कोद्गारः, कासश्वासौ, हिक्का, वायोरूर्द्ध्वगमनं, शूलोद्वेष्टनं, तृष्णा, लालास्रावः, फेनागमनं, स्रोतोऽवरोध, स्तास्ताश्च वात-वेदना भवन्ति॥ (२७)

मण्डलिदष्टलक्षणमाह—

मण्डलिविषेण—त्वगादीनां पीतत्वं, शीताभिलाषः, परि-धूपनं, दाहः, तृष्णा, मदो, मूर्च्छा, ज्वरः, शोणितागमनमूर्द्ध मधश्च, मांसानामवशातनं, श्वयथु, दंशकोथः पीतरूपदर्शन, माशुकोपस्तांस्ताश्च पित्तवेदना भवन्ति॥ (२८)

राजिमद्दष्टलक्षणमाह—

राजिमद्विषेण—शुक्लत्वं त्वगादीनां, शीत-ज्वरो, रोम-हर्षः, स्तब्धत्वं गात्राणा, मादंशशोफः, सान्द्रकफप्रसेक, श्छर्द्दिरभीक्ष्ण,

---

(२७) कटीपृष्ठेति। एतेनोपवेशनासामर्थ्यं भवति। स्वरावसादः स्वरभङ्गः। घुर्घुरकः मार्ज्जारगलशब्दानुकारी कण्ठध्वनिः। शूलोद्वेष्टनं सशूलमङ्गमोटनं। फेनागमनं मुखादिति शेषः। ताश्चा वातवेदनाः स्फुटनविमथनसंशशूलादयः।

(२८) शीताभिलाषः शीतलाहारविहारप्रार्थना। परिधूपनमङ्गसन्तापः। मदः शिरोघूर्णनम्। शोणितागमनमूर्द्धमधश्च ऊर्द्धधःशोणितस्रावः। मांसावशातनं पूतितया मांसस्खलनं, दंशकोथः दंशस्य पूतित्वं, पीतरूपदर्शनं सर्व्वं पीतं पश्यति। आशुकोपः सुखभक्रोधः। तास्ताश्चपित्तवेदना शोषचोषादयः।

मक्ष्णोः कण्डूः, कण्ठे शयथुः, घुर्घुरक, उच्छ्वासनिरोध, तमः-प्रवेश, स्तास्ताश्च कफवेदना भवन्ति ॥ (२८)

स्त्रीपुंबालसूतिकागर्भिणीग्रासार्थिं नपुंसकाभिदष्टानां लिङ्गमाह—

पुरुषाभिदष्ट ऊर्द्ध्वं प्रेक्षते, अधस्तात् स्त्रिया, सिराश्चोत्तिष्ठन्ति ललाटे। नपुंसकाभिदष्टस्तिर्य्यक्प्रेक्षी भवति। गर्भिण्या पाण्डुमुखो ध्मातश्च। सूतिकया कुक्षि-शूलार्त्तो सरुधिरं मेहत्युपजिह्विका चास्य भवति। ग्रासार्थिनान्नं काङ्क्षति। वृद्धेन चिरात् मन्दा वेगाश्च। बालेनाशु मृदवश्च। निर्व्विषेणाविषलिङ्गम्। अन्धाहिकेनान्धत्वमित्येके। ग्रसनादजगरः शरीरप्राणहरः, न विषात्। (३०)

सद्यप्राणहराहिदष्टलक्षणमाह—

तत्र सद्यःप्राणहराहिदष्टः पतति शस्त्राशनिनिहत इव भूमौ, स्रस्ताङ्गः स्वपिति ॥

विशिष्टदेशनक्षत्रादिषु वर्ज्जनीयान् दष्टानाह—

अश्वत्थदेवायतनश्मशान-वल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये सपित्र्ये परिवर्ज्जनीया ऋक्षे नरा मर्म्मसु ये च दष्टाः ॥(३१)

---

(२९) आदंशशोफः दंशस्य समन्तात् शोथः। सान्द्रेति। घनश्च मचरणम्। तमःप्रवेशः दष्टजन आत्मानं तमोनिमज्जित मिव मन्यते। तास्ताश्च कफवेदना कण्ड्वादयः।

(३०) अधस्तात् प्रेक्षत इत्यर्थः। सिराश्चेति। ललाटे सिरादर्शनं भवति। ध्मातः आध्मानयुक्तः। सूतिकया सर्पिण्येति शेषः। मेहति मूत्रयति। वृद्धेन दष्टस्येति शेषः। बालेनेति। मृदवः विषवेगा इति शेषः। अन्धाहिकेण अन्धसर्पेण।

(३१) अश्वत्थवृक्षतले, देवतास्थाने, श्मशाने शवदाहस्थाने, याम्ये ऋक्षे भरणीनक्षत्रे, पित्र्ये ऋक्षे मघानक्षत्रे।

दष्टस्यासाध्यलक्षणमाह—

दष्टमात्रः सितास्याक्षः शीर्य्यमाणशिरोरुहः । (३२)
स्तब्धजिह्वोमुहुर्मूर्च्छन् शीतोच्छ्वासो न जीवति ।
हिक्काश्वासौ वमिः कासो दष्टमात्रस्य देहिनः ।
जायते युगपद् यस्य स हृच्छूली न जीवति ।
वेपथु र्वेदनास्तीव्रा ग्रीवाभङ्गाचिरक्तता: ।
मूर्च्छागलग्रहच्छर्द्दि: प्रेतराजस्य किङ्कराः ।
जाम्बवप्रमितो दंशः कूर्म्मपृष्ठवदुन्नतः ।
रक्तं खेभ्यः समस्तेभ्यो वर्त्तते न तु दंशतः ।
रोमहर्षो न शिशिरैः श्वयथु र्लोहितासितः ।
हृष्टमेहनता वक्रवक्त्रत्वं यस्य तं त्यजेत् ।
न नश्ये श्वतना तीक्ष्णै र्न क्षतात् क्षतजागमः ।
दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकं ।

---

(३१) सितास्याक्षेति । यस्य मुखं अक्षि च शुभ्रवर्णं । शीर्य्यमानेति : यस्य मस्तकस्य केशाः पतन्ति । स्तब्धजिह्वेति । जिह्वायाः स्तब्धत्वेन पानवाक्येषु असमर्थत्वं ; मुहुरिति लब्धचैतन्येऽपि पुनरचैतन्यं । शीतोच्छ्वासेति । परित्यक्तश्वासवायोरुष्णत्वं स्वाभाविकं तस्य यदि शीतत्वं स्यात् । हृच्छूलीति यदि हृदि शूलं स्यात् । हिक्कादि-हृच्छूलान्तानां युगपद्दर्शनेऽसाध्यत्वं । वेपथुः कम्पः । ग्रीवाभङ्गेति । शिरोधारणा-सामर्थ्यं, अक्ष्णो र्लौहित्यं च । गलग्रहेति । गलरोधःइव पीड़ा तेन भोजने अशक्तिः ; जाम्बवप्रतिमेति । पक्वजम्बूफलतुल्यवर्णः लोहितानुविद्धः कृष्णवर्ण इत्यर्थः ; रोमाञ्चितमेहनः । दण्डाहतस्येति । दण्डेण प्रहृते अस्याङ्गे प्रहाररेखा न दृश्यते ; सकलाश्रतस्य इत्यर्थः । उन्मत्तमिति दष्टमात्रमेव स उन्मत्तवत् चित्तविकारं दर्शयति ।

वर्त्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्द्ध्वमधश्च यस्य ।
दंष्ट्रानिपाताः सकलाश्च यस्य तञ्चापि वैद्यः परिवर्ज्जयेत्तु ॥
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाप्यथवा विवर्णम् ।
सारिष्टमत्यर्थमवेगिनञ्च जह्याच्च तं कर्म्म न तत्र कुर्य्यात् ॥
अतोऽन्यथा तु त्वरया प्रदीप्तागारवद्भिषक् ।
रक्षन् कण्ठागतान् प्राणान् विषमाशु शमं नयेत् ।

---

## अथ विषगुणगतिविज्ञानीयो नाम षष्ठोऽध्यायः ।

विषं रूक्षत्वादिगुणत्वात् यत् करोति तदाह—

तत्र तैक्ष्ण्यौष्ण्यात् पित्तं रक्तं च प्रकोपयति, रौक्ष्याद्वायुं, वैशद्यादसक्तवेगं प्रसरति, सौक्ष्म्यात् व्यवायित्वाच्च दोषधातुमलादीन् समन्तात् शरीरावयवान् अनुप्रविशति, आशुकारित्वात् आशु व्यापादयति, विकाशित्वात् मर्म्मच्छेदेन मतिं व्यामोहयति, लाघवात् दुर्निर्हरम्, अव्यक्तरसत्वात् श्लेष्मप्रकोपं अन्नरसांश्च सर्व्वाननुवर्त्तते, अतएव च प्रयत्नेनान्नानि विषतो रक्षेदित्युक्तम् । अपाकित्वात् जरां न याति, तेनाभ्यवहृतं अवश्यं मारयति । मन्त्रौषधवलेन चोपशमितमपि प्रत्ययमासाद्य प्रकुप्यतीति ।

आन्तरीक्ष्यतोयदृष्टान्तेन विषस्यापि नानारसवीर्य्यहेतुत्वं दर्शयति—

यथाव्यक्तरसं तोय मन्तरीक्षान्महीगतम् ।
तेषु तेष प्रदेशेषु रसं तं तं नियच्छति ।

एवमेव विषं यद् यद् द्रव्यं व्याप्यावतिष्ठते ।
स्वभावादेव तं तस्य रसं समनुवर्त्तते ॥

दर्व्वीकरमण्डलराजिलानां विषस्य क्रमेण वातपित्तकफकोपनत्वमाह—

विशेषाद्रुक्षकटुकमम्लोष्णं स्वादुशीतलं ।
विषं दर्व्वीकरादीनां क्रमाद्वातादिकोपनम् ॥

वयाणां वैकरञ्जानां विषस्य यद्द्विदोषकरत्वं तन्मातृपितृमूलकमेवेति दर्शयन्नाह—

अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम् । (३३)
ज्ञेयौ दोषौ च दम्पत्योर्विशेषस्तात्र वक्ष्यते ॥

मतान्तरमाह—

तेषामाद्यस्य पितृवद्विषोत्कर्षः, द्वयोर्मातृवदित्येके ॥ (३४)

वैकरञ्जानां विषोत्कर्षं मुक्त्वा तदपत्यानां विषं केषामनुयायि भवतीति दर्शयन्नाह—

वयानां वैकरञ्जानां पुनर्दिव्येलक-रोध्रपुष्प-राजिचित्र-पोटगल-पुष्पाभिकीर्ण-दर्भपुष्प-वेल्लितकाः सप्त; तेषामाद्यास्त्रयो राजिलवत् शेषा मण्डलिवत् । (३५)

---

(३३) अपत्यमित्यादि। असमानवर्णाभ्यां सर्पसर्पिणीभ्यां यदपत्यं वैकरञ्जाख्यं तद्द्विदोषकरलक्षणं द्विदोषकराणि लक्षणानि यत्र तद्द्विदोषकरलक्षणं एतेन वैकरञ्जस्य द्विदोषकर्त्तृत्वमुक्तम्। अपत्ये यौ द्विदोषौ तौ कयोरित्याह ज्ञेयाविति। ज्ञेयौ ज्ञातव्यौ दम्पत्योः पितृमात्रोरित्यर्थः। ( नि: सं )

(३४) आद्यस्य माकुलेः पितृवत् कृष्णसर्पवत्। द्वयोः पोटगलस्निग्धराजिकयोः मातृवत्। तत्र पोटगलस्य माता गोनसी, स्निग्धराजिकस्य माता राजिमती।

(३५) आद्यास्त्रय इति दिव्येलकरोध्रपुष्पकराजिचित्रका इति।

सामान्यतः सर्पविष-गुणमाह—

अपि चैतद्विषं सर्व्वं तीक्ष्णाद्यैरन्वितं गुणैः ।
वातपित्तोत्तरं नृणां सद्योहरति जीवितम् ।
विषं हि देहं संप्राप्य प्राग्दूषयति शोणितम् ।
कफपित्तानिलांश्चानु समं दोषान् सहाशयान् ।
ततो हृदयमास्थाय देहोच्छेदाय कल्पते ।
शरीरं दूषिते रक्ते सर्व्वं चिमचिमायते ।
कोठः समण्डलः स्वेदः रोमहर्षश्च जायते । (२६)
क्षुद्रकीटा इवाङ्गे मे विसर्पन्तीति मन्यते ।
विनामयति गात्राणि जृम्भते शिशिरप्रियः ।
स्थापिनस्तस्य दुष्टस्य रक्तस्य विषतेजसः ।
वातादयो भृशं यान्ति बलिनोऽप्यबला इव ।
विषं यद्दोषभूयिष्ठं तं दोषं प्राक् प्रपद्यते ।

विषमाशयविशेषं प्राप्य यत् करोति तदाह—

आश्रये यस्य यस्यैव ततस्तदवतिष्ठते ।
तज्जान् विकारान् कुरुते यान् सर्पेष्व्पदेक्ष्यते ।
वाताशयस्थं कुरुते तथा श्लेष्मामयानपि ।
पित्तश्लेष्माशयगतं तद्वत् पित्तकफोद्भवान् ।

(२६) कोठः वरटीदष्टसङ्काशः । यद्दोषभूयिष्ठमिति दर्व्वीकराणां विषं वातभूयिष्ठं, मण्डलिनां पित्तभूयिष्ठं राजिमतान्तु श्लेष्मभूयिष्ठमिति । उत्तमाङ्गस्थे विष इति शेषः । स्थापिनीमिति धातुव्याप्ति शीलः ।

विषमङ्गविशेषगतं यत् करोति तदाह—

तत्रापि चोत्तमाङ्गस्थे सकोठं शूयते शिरः ।
विशेषादक्षिकूटोष्ठनासास्यं हृष्टदन्तता ।
तालुशोषो रुजा मूर्ध्नि वक्त्रे चिमचिमायनम् ।
अर्थेषु चक्षुरादीनां अप्रवृत्तिर्हनुग्रहः ।
इत्यन्यत्रापि च विषं स्थितमङ्गेऽभिलक्षयेत् ।
व्याप्यैवं सकलं देहमुपरुध्य च वाहिनीम् ।
विषं विषमिव क्षिप्रं प्राणानस्य निरस्यति ।
विषे यस्माद् गुणाः सर्वे तीक्ष्णाः प्रायेण सन्ति हि ।
विषं सर्वमतोज्ञेयं सर्वदोषप्रकोपणम् ।
ते तु वृत्तिं प्रकुपिता जहति स्वां विषार्दिताः । (२७)
नोपयाति विषं पाकमतः प्राणान् रुणद्धि च ॥
श्लेष्मणावृतमार्गत्वादुच्छ्वासोऽस्य निरुध्यते ।
विसंज्ञः सति जीवेऽपि तस्मात्तिष्ठति मानवः ।

दर्व्वीकरादीनां वैकरञ्जानाञ्च विषोल्वणत्वे कालप्रभावमाह—

वृष्टिवातातपेषु च ।
विषोल्वणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ।

---

(२७) ते त्विति ते वातादयः प्रकुपिताः विषदुष्टाः अतः स्वां वृत्तिं प्रकृतिस्थानां तेषां कर्म्माणि जहति परित्यजन्ति । सत्यपि जीवे कस्मात् विषार्दितो विसंज्ञस्तिष्ठति ? अत्रोत्तरमाह—श्लेष्मणावृतमार्गत्वादिति । व्यन्तरा व्यतिकराज्जाताः ऋतुसन्धिषु विषोल्वणा भवन्ति ।

दर्व्वीकरादीनां उग्रविषत्वे वयोविशेषमाह—

दर्व्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा।
राजिमन्तो वयोमध्या जायन्ते मृत्युहेतवः॥

तेषामेवाल्पविषत्वे हेतुमाह—

जलाप्लुता रतिक्षीणा भीता नकुलनिर्ज्जिताः। (३८)
शीतवातातपव्याधिक्षुत्तृष्णापरिपीड़िताः।
तूर्णं देशान्तरायाता विमुक्तविषकञ्चुकाः।
कुशौषधिकण्टकवद् ये चरन्ति च काननं।
देशञ्च दिव्याध्युषितं सर्पास्तेऽल्पविषाः मताः।

दर्व्वीकराणां विषगतीराह—

तत्र सर्व्वेषां सर्पाणां विषस्य सप्त वेगा भवन्ति। तत्र दर्व्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति, तत् प्रदुष्टं कृष्णतामुपैति; तेन कार्ष्ण्यं पिपीलिकापरिसर्पणमिव चाङ्गे भवति। द्वितीये मांसं दूषयति; तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे भवन्ति। तृतीये मेदो दूषयति; तेन दंशक्लेदः शिरोगौरवं स्वेदश्चक्षुर्ग्रहणञ्च।

---

(३८) नकुलः सर्पवैरी तेन निर्ज्जिता आक्रान्ताः। विमुक्तविषकञ्चुका इति। कञ्चुकः सर्पनिर्मोकः, विषमोचनन्तु दंशद्वारेण, कञ्चुकत्यागस्तु स्वभावानुगतएव। तत्प्रतीतिस्त्वचोऽतिचिक्कणतया आलस्येन च ज्ञेया। चक्षुर्ग्रहणञ्च तद्गतव्याधिदर्शनेन ज्ञेयम्। सन्धिविश्लेषा इति सन्धयः च्युताइव मन्यते। प्रच्यावयति स्रावयति।

चतुर्थे कोष्ठमनुप्रविश्य कफप्रधानान् दोषान् दूषयति; तेन तन्द्राप्रसेकसन्धिविश्लेषा भवन्ति। पञ्चमेऽस्थीन्यनुप्रविशति, प्राणमग्निञ्च दूषयति ; तेन पर्व्वभेदो हिक्का दाहश्च भवति। षष्ठे मज्जानमनुप्रविशति, ग्रहणीञ्चात्यर्थं दूषयति ; तेन गात्राणां गौरवमतिसारो हृत्पीड़ा मूर्च्छा च भवति। सप्तमे शुक्रमनुप्रविशति, व्यानञ्चात्यर्थं कोपयति, कफञ्च सूक्ष्मस्रोतोभ्यः प्रच्यावयति ; तेन श्लेष्मवर्त्तिप्रादुर्भावः पृष्ठ-भङ्गश्च सर्व्वचेष्टाविघातो लालास्वेदयोरतिप्रवृत्ति रुच्छ्वास-निरोधश्च भवति ॥

मण्डलिनां विषगतीराह—

तत्र मण्डलिनां प्रथमे वेगे विषं शोणितं दूषयति, तत् प्रदुष्टं पीततामुपैति तत्र परिदाहः पीतावभासता चाङ्गानां भवति। द्वितीये मांसं दूषयति ; तेनात्यर्थं पीततापरिदाहौ दंशे श्वयथुश्च भवति। तृतीये मेदो दूषयति ; तेन पूर्व्ववच्चक्षु-र्ग्रहणं, तृष्णा दंशे क्लेदः स्वेदश्च। चतुर्थे कोष्ठमनुप्रविश्य ज्वरमापादयति। पञ्चमे परिदाहं सर्व्वगात्रेषु करोति। षष्ठ-सप्तमयोः पूर्ववत् ॥

राजीमतां विषगतीराह—

राजिमतां प्रथमे वेगे विषं शोणितं दूषयति, तत् प्रदुष्टं पाण्डुतामुपैति ; तेन रोमहर्षः शुक्लावभासश्च पुरुषो भवति। द्वितीये मांसं दूषयति ; तेन पाण्डुतात्यर्थं जाड्यं शिरःशोफश्च भवति। तृतीये मेदो दूषयति तेन चक्षुर्ग्रहणं, दन्तक्लेदः

स्वेदो घ्राणाच्चिस्रावश्च भवति। चतुर्थे कोष्ठमनुप्रविश्य मन्यास्तम्भं शिरोगौरवञ्चापादयति। पञ्चमे वाक्सङ्गं शीतज्वरञ्च करोति। षष्ठसप्तमयोः पूर्ववदिति॥

पुनर्वसुकथितानष्टौ वेगानाह—

सप्तवेगान् विषस्याहुरष्टाविति पुनर्वसुः।
दूष्यति प्रथमे वेगे रसश्छर्दिप्रसेककृत्। (१)
द्वितीयेऽस्रं चिमचिमाजृम्भावेपथुकारि तत्।
तृतीये पिशितं कण्डूकोठमण्डलशोफदम्।
दोषाश्चतुर्थे तेषु स्युर्यथायथमुपद्रवाः।
पञ्चमे दर्शने भ्रान्तिः, षष्ठे हिक्का-समुद्भवः।
सप्तमे स्कन्धभग्नस्य जायते मृत्युरष्टमे।

नग्नजित्कथितान् सप्तवेगानाह—

दूष्यति प्रथमे रक्तं द्वितीये श्वयथूदयः।
तृतीयेऽङ्गे चिमचिमा चतुर्थे ज्वरमूर्च्छना।
पञ्चमे पाण्डुजिह्वाऽऽस्य शोफः षष्ठे हृदि व्यथा।
सप्तमे मरणं वेग इति नग्नजितो मतम्।

---

(१) प्रथमे विषवेगे रसधातुर्दूष्यति। रसदूषणफलं वमनं मुखाज्जलस्रावश्च। द्वितीये वेगे रक्तं दूष्यति तत्फलं चिमचिमा, जृम्भा, कम्पश्च। तृतीये वेगे मांसं दूष्यति। एतद्दूषणं तु दष्टस्य गात्रेषु कण्डूकोठमण्डलशोफानां दर्शनेन ज्ञेयम्। चतुर्थवेगे तेषु रसरक्तमांसेषु धातुषु दोषा वातपित्तकफा यथायथमुपद्रवाः स्युः रसादिगतानां वातादीनां यल्लक्षणं तत् तत्र दृश्यत इत्यर्थः। पञ्चमे वेगे दृष्टिविभ्रमो जायते।

विदेहपतिकथितान् सप्तवेगानाह—

मूर्च्छा हृदि परं पीड़ा शिरोरुगपतन्त्रकः । (२)
हिक्का च दारुणो मर्म्मच्छेदो जीवितसंक्षयः ।
सप्तेति वेगा मूर्च्छाद्या विदेहपतिना स्मृताः ।

आलम्बायनोदितान् सप्तवेगानाह—

रक्तमांसवसास्नायु तथास्थ्याद्यास्त्वयः क्रमात् ।
आश्रया सप्त सप्ताना मित्यालम्बायनोऽब्रवीत् ।

कुतः पुनः सप्तैव वेगा इत्याह—

धात्वन्तरेषु याः सप्त कलाः पूर्व्वं प्रकीर्त्तिताः । (३)
अतीत्य तासामेकैकां वेगं प्रकुरुते विषम् ।

---

षष्ठे वेगे हिक्का ; सप्तमे शिरोधारण-शक्ति लुप्यते, अष्टमे मृत्युरिति पुनर्वसुप्रोक्तमष्टानां विषवेगानां लक्षणम् ।

(२) प्रथमे विषवेगे मूर्च्छा, द्वितीये हृदये अत्यर्थं वेदना, तृतीये शिरोवेदना चतुर्थे अपतन्त्रकोनाम वातव्याधिलक्षणं, पञ्चमे हिक्का, षष्ठे मर्म्मसु हृदयवस्तिशिरःसु दारुणा छेदवत्पीड़ा, सप्तमे प्राणहानिः ।

(३) पूर्व्वमिति गर्भव्याकरण इत्यर्थः । तासु [illegible] धातुषु एकैकामतिक्रम्य सप्त वेगा भवन्ति तद्यथा—रसरक्तयोरन्तरस्थां कलाम[illegible]य रक्ते प्रथमो वेगः । रक्तमांसयोरन्तरस्थां कलामतिक्रम्य द्वितीयः, मांसमेदसोरन्तरस्थां कलामतिक्रम्य तृतीयः, मेदःकफयोरन्तरस्थां कलामतिक्रम्य चतुर्थः, कफपुरीषयो रन्तरस्थां कलामतिक्रम्य पञ्चमः; पुरीषपित्तयोरन्तरस्थां कलामतिक्रम्य षष्ठः, पित्तशुक्रयोरन्तरस्थां कलामतिक्रम्य सप्तम इति । येव कला पुरीषधरा सैवास्थिधरेति पञ्चमे अस्थिन्यनुप्रविशतीत्यविरुद्धम् । एवं येव पित्तधरा सैव मज्जधरेति षष्ठे मज्जानमनुप्रविशतीत्यविरुद्धम् ।

वेगमभिधाय वेगान्तरमाह—

तत्कालकल्पं कालेन कलामभ्येति यावता । (४)
ऊह्यमानं समोरेण तावद्वेगान्तरं स्मृतम् ।
मुनिना येन यत्रोक्तं तत्सर्व्वमिति दर्शितम् ।

विषस्वरूपावधारणार्थं विषाभासं सर्पाङ्गाभिहतं शङ्काविषञ्चाह—

भीरोस्तु सर्पसंस्पर्शाद् भयेन कुपितोऽनिलः । (५)
कदाचित् कुरुते शोफं सर्पाङ्गाभिहतं हि तत् ।
दुर्गान्धकारे विद्धस्य केनचिद् दष्टशङ्कया । (६)
विषोद्रेको ज्वरच्छर्द्दिमूर्च्छादाहोऽपि वा भवेत् ।
ग्लानिर्मोहोऽतिसारो वा तच्छंकाविषमुच्यते ।

संप्रति पशुपक्षिष्वपि विषवेगसंख्यामुद्दिशन्नाह—

शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः ।
लालास्रावो द्वितीये तु कृशाङ्गः पोड्यते हृदि ॥
तृतीये च शिरोदुःखं कण्ठग्रोवञ्च भज्यते ।
चतुर्थे वेपते मूढ़ः खादन् दन्तान् जहात्यसून् ॥

---

(४) यावता कालेन कालकल्पं मृत्युसदृशं विषं वायुना प्रेरितं कलामुत्तालचर्या अभ्येति प्राप्नोति तत्तु वेगान्तरभूतस्य भविष्यतश्च वेगस्य मध्यभूतकालः तावत्प्रमाण इत्यर्थः ।

(५) भीतस्य पुंसः सर्पस्पर्शाद्धेतोः भयं, तेन वायुः क्रुद्धः कदाचित् शोथं कुरुते । तत् सर्पाङ्गाभिहतं स्यात् ।

(६) दुर्गान्धकार इति । दुर्गमे अन्धकारावृते वा स्थाने केनचित् प्राणिना दष्टस्य कण्टकादिना वा विद्धस्य दष्टशङ्कया विषोद्रेकादयः स्युः । तत् शङ्काविषं कथ्यते ।

केचिद्वेगत्रयं प्राहुरन्त्यश्चैतेषु तद्विदः ॥ (७)
ध्यायति प्रथमे वेगे पक्षी मुह्यत्यतः परम् ।
द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति ॥
केचिदेकं विहङ्गेषु विषवेगमुशन्ति हि ॥
मार्जारनकुलादीनां विषं नातिप्रवर्त्तते ॥

विषदिग्धस्य लक्षणमाह—

विषदिग्धेन विद्धस्तः प्रताम्यति मुहुर्मुहुः ।
विवर्णभावं भजते विषादञ्चाशु गच्छति ।
कीटैरिवावृतञ्चास्य गात्रं चिमिचिमायते ।
श्रोणि-पृष्ठ-शिरः-स्कन्धसन्धयः स्युः सवेदनाः ।
कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ।
दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ।
आरक्तपीतपर्य्यन्तः श्यावमध्योऽतिरुग्व्रणः
सूयते पच्यते सद्यो गत्वा मांसञ्च कृष्णताम् ।
प्रक्लिन्नं शीर्य्यतेऽभीक्ष्णं सपिच्छिल-परिस्रवम् ।

विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य चारिष्टलक्षणमाह—

फेनं वमति निःसंज्ञः श्यावपादकराननः ।
नासावसादः भङ्गोऽङ्गे विड्भेदःश्लथसन्धिता ।

(७) केचिदिति। एतेषु चतुर्षु वेगेषु मध्ये केचित् अपरं वेगत्रयमाहुः तन्मते पशुष्वपि सप्तैव विषवेगाः !

विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च । (८)
भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये ।

विषसङ्कटमाह—

विषप्रकृति कालान्नदोषदूष्यादिसङ्गमे ।
विषसङ्कटमुद्दिष्टं शतस्यैकोऽत्रजीवति । (९)

इति विषगुणगतिविज्ञानीयो नाम षष्ठाऽध्यायः समाप्तः ।

---

## अथ मूषिकालर्कादि-संख्यादष्टलक्षण-विज्ञानीयो नाम सप्तमोऽध्यायः ।

मूषिकानां तानेवाष्टादशभेदानाह—

लालनः पुत्रकः कृष्णो हंसिरश्चिक्किरस्तथा । (१०)
छुछुन्दरोऽलसश्चैव कषायदशनोऽपि च ॥
कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा ।
कोकिलोऽरुणसंज्ञश्च महाकृष्णस्तयोन्दुरः ॥

---

(८) दिग्धेनेति । दिग्धेन विषलिप्तशस्त्रबाणादिना अभिहतस्य जीवितक्षये संप्राप्ते सामान्येनैतानि रूपाणि स्युः ।

(९) विषप्रकृत्यादियोगे सति विषसङ्कटं कथितम् । विषसङ्कटेऽस्मिन् विषार्तः शतमध्ये एको जीवति । विषप्रकृतिः पित्तप्रकृतिः, विषकालो वर्षा, विषान्नं सर्षपादि, विषदोषः पित्तम्, विषदूष्यं रक्तं, आदिशब्देन देशसात्म्ययोर्ग्रहणम् ।

(१०) लालनपुत्रकादिमूषिकजातिविशेषज्ञानं नानादेशीयलोकेभ्योऽवगन्तव्यम् । ( सु: टी: )

श्वेतेन महता सार्द्धं कपिलेनाखुना तथा ।
मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः ॥

मूषिकाणां शुक्रविषत्वं दर्शयति—

शुक्रं पतति यत्रैषां शुक्रदृष्टैः स्पृशन्ति वा । (११)
नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदुष्यति ॥

सामान्यतोदष्टरूपमाह—

जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च ।
पिड़कोपचयश्चोग्रा विसर्पाः किटिभानि च ॥
पर्व्वभेदो रुजस्तीव्रा ज्वरो मूर्च्छा च दारुणा ।
दौर्व्वल्यमरुचिः श्वासो वेपथुर्लोमहर्षणम् ॥
दष्टरूपं समासोक्तमेतच्च व्यासतः शृणु ।

लालनदष्टलक्षणमाह—

लालास्रावो लालनेन हिक्का च्छर्द्दिश्च जायते ।

पुत्रकदष्टलक्षणमाह—

पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च जायते ।
चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः । (१२)

---

(११) शुक्रदृष्टैर्नखदन्तादिभिर्न तु केवले रतस्तेषां शुक्रविषत्वमविरुद्धम् । जायन्त इति । कर्णिका कमलमध्यवीजकोषस्तदाकृतिः ।

(१२) पुत्रकेणेति । आखुशावकसन्निभैर्मूषिकशिशुतुल्यैः ग्रन्थिभिर्गात्रं चीयते व्याप्यते विशेषेण पुत्रकदष्टे । सामान्यतः पुनःसर्व्वमूषिकदंशे एवम्भूताः ग्रन्थयो जायन्ते । तथ्य नास्त्यगिति अत्रापि शिशुमूषिकाकृतिग्रन्थयो जायन्तेऽङ्गे ।

कृष्णाख्यमूषिकदष्टलक्षणमाह—

कृष्णेनासृक् छर्दयति दुर्दिनेषु विशेषतः ।

हंसिरदष्टलक्षणमाह—

हंसिरेणान्नविद्वेषो जृम्भा लोमाञ्चहर्षणम् ।

चिक्किरदष्टलक्षणमाह—

चिक्किरेण शिरोदुःखं शोफो हिक्का वमी तथा ।

कुकुन्दरदष्टलक्षणमाह—

कुकुन्दरेण विड्भङ्गो ग्रीवास्तम्भो विजृम्भणम् ॥

अलसदष्टलक्षणमाह—

ग्रीवास्तम्भोऽलसेनोर्द्ध्वं वायुर्दंशे रुजा ज्वरः ।

कषायदन्तदष्टलक्षणमाह—

निद्रा कषायदन्तेन हृच्छोषः कार्श्यमेव च ।

कुलिङ्गदष्टलक्षणमाह—

कुलिङ्गेन रुजः शोफो राज्यश्च दंशमण्डले ।

अजितदष्टलक्षणमाह—

अजितेन वमी मूर्च्छा हृद्ग्रहः कृष्णनेत्रता ।

चपलदष्टलक्षणमाह—

चपलेन भवेच्छर्दिं र्मूर्च्छा च सह तृष्णया ।

कपिलदष्टलक्षणमाह—

कपिलेन व्रणे कोथो ज्वरो ग्रन्थ्युद्गमस्तथा ॥

कोकिलदष्टलक्षणमाह—

अन्यय: कोकिलेनोग्रा ज्वरो दाहश्च दारुण:।

श्वेतारुणकपिल-कपोत-महाकृष्णाणां पञ्चानां दष्टलक्षणमाह—

अरुणेनानिल: क्रुद्धो वातजान् कुरुते गदान्। (१३)
महाकृष्णेण पित्तञ्च श्वेतेन कफ मेव च॥
महता कपिलेनासृक् कपोतेन चतुष्टयम्।
भवन्ति चैषां दंशेषु ग्रन्थिमण्डलकर्णिका:॥
पिड़कोपचयाश्चोग्रा: शोफश्च भृशदारुण:।

शृगालश्वादीनामुन्माद-हेतुलक्षणमाह—

शृगालश्वतरक्ष्वृक्ष-व्याघ्रादीनां यदानिल:। (१४)
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रित:॥
तदा प्रस्रस्तलाङ्गूल-हनुस्कन्धोऽतिलालवान्।
अत्यर्थं वधिरोऽन्धश्च सोऽन्योन्यमभिधावति॥

---

(१३) अरुणेन मूषिकेन दष्टस्य अनिल: क्रुद्धो वातजान् गदान् कुरुते। महाकृष्णेन मूषिकेन दष्टस्य पित्तं, श्वेतेन मूषिकेन दष्टस्य च कफं, कपिलेन च रक्तं प्रकुप्यति। कपोतेन च दष्टस्य वातादिचतुष्टयं। एषामरुणादीनां दंशेषु सामान्यतो ग्रन्थिमण्डलादय: स्यु:।

(१४) शृगालादीनां अनिलो वायु: यदा कफेनदुष्ट: सन् संज्ञावहासु नाड़ीषु आश्रयं करोति तदा तेषां संज्ञां सम्यक्ज्ञानं मुष्णाति हरति। सम्यग्ज्ञानहरणाच्च ते कीदृशोभवन्तीत्याह तदेति। प्रस्रस्तं शिथिलं लाङ्गूलं हनुर्यस्य स:। अतिलालवान् अतिशयेन लालास्रावयुक्त:। तेषामन्धत्वं बाधिर्य्यञ्च तत् तच्चेष्टाविशेषै र्ज्ञायते। अन्योन्यमिति परस्परं दष्टुमभिधावति।

दष्टलक्षणमाह—

तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु । (१५)
सुप्तता जायते दंशे कृष्णञ्चातिस्रवत्यसृक् ।
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥

अरिष्टमाह—

येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः । (१६)
बहुशः प्रतिकुर्व्वाणः क्रियाहीनो विनश्यति ॥
दंष्ट्रिणा येन दष्टश्च तद्रूपं यदि पश्यति ॥
अप्सु वा यदिवादर्शे रिष्टं तस्य विनिर्द्दिशेत् ॥

जलत्रासरूपमरिष्टमाह—

त्रस्यत्यकस्माद् योऽभीक्ष्णं श्रुत्वा दृष्ट्वापि वा जलम् ।(१७
जलत्रासन्तु विद्यात् तं रिष्टं तमपि कीर्त्तितम् ॥

---

(१५) सविषेण उन्मत्तेन तेन शृगालादिना दष्टस्य पुरुषस्य दंशे सुप्तता स्पर्श-ज्ञानराहित्यं जायते। दिग्धविद्धस्येति विषलिप्तेन शस्त्रबाणादिना अभिहतस्य यल्लक्षणं भवति अत्रापि तेनैव लक्षणेन युक्त इत्यर्थः ।

(१६) येनेति । चेष्टा क्रिया, रुत शब्दः, बहुशः वारम्बारं प्रतिकुर्व्वाणः अनु-कुर्व्वन्, क्रियाहीनो मानुषोचितकायमनोव्यापारवर्ज्जितः ।

(१७) त्रस्यतीति । अकस्मात्त्रासहेतुं विना । रिष्टं मरणलक्षणम् । अदष्ट इति । अत्र ईषदर्थे नञ्, ईषद्दष्टस्यापि यदि जलत्रासोभवति तदा न सिध्यति का कथा सम्यग्दष्टस्य । केचिदत्र नञो निषेधार्थं गृहीत्वा यथा शृगालादिदष्टस्य जलत्रासो भवति तथा तैरदष्टस्यापि कुपितकफस्य जलत्रासो भवत्येवेति व्याख्यानयन्ति तन्त्रान्तरात् प्रमाणञ्च दर्शयन्ति यथा—"जलं विना जलत्रासो जायते श्लेष्मसञ्चयात् ।

अदृष्टो वा जलत्रासो न कथञ्चन सिध्यति ।
प्रसुप्तोऽप्युत्थितो वापि स्वस्थस्तो न सिध्यति ॥
श्वादयोऽभिहिता व्याला वातपित्तप्रकोपणाः ।
अतः करोति दष्टस्तु तेषां चेष्टां रुतं नरः ॥
बहुशः प्रतिकुर्वाणो न चिरान्म्रियते च सः ॥

---

## अथ कीटसंख्यादष्टलक्षणविज्ञानीयो नाम अष्टमोऽध्यायः ।

आदौ कीटानां प्रभवं संख्याञ्चाह—

सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः । (१८)
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः ॥
सर्वदोषप्रकृतिभिर्युक्तास्ते परिणामतः ।
कीटत्वेऽपि सुघोरास्ते सर्व्वं एव चतुर्व्विधाः ॥

---

बुद्धिस्थानं यदा श्लेष्मा केवलं प्रतिपद्यते । तदा बुद्धौ निरुद्धायां श्लेष्मणाधिष्ठितोनरः । जाग्रत् सुप्तोत्थमात्मानं मज्जन्तमिव मन्यते । सलिले वसति तदा जलत्रासन्तु तं विदुः । श्लेष्मघ्नं तत्र कर्त्तव्यं शोधनं शमनानि च । आहारस्य विधानेन यावत् स प्रकृतिं व्रजेत्” । किन्त्वत्र विषप्रकरण-पठितत्वात् आकरोक्तश्लेष्मविकारेषु जलवासापठनाश्च नञ ईषदर्थग्रहणमेव साधु । प्रसुप्त इति । ईषद्दृष्टस्यापि जलवासमरिष्टमित्युक्ता अधुना शान्तविषविकारस्यापि सुप्तस्य सुप्तोत्थितस्य वा त्रस्तता प्राणहरी भवेदिति दर्शयितुमाह स्वस्थ इति । एतेन श्वादिविषस्य दष्टपुरुषशरीरे गूढावस्थानं कालान्तरविकारकर्त्तृत्वञ्च सूचितम् ।

(१८) सर्पाणामित्यादि । शवो मृतसर्पशरीरं तस्य पूतिः कोथः ।

वायव्यकीटानाह—

कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः । (१९)
उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका ॥
आवर्त्तकस्तथोरभ्रः सारिकामुखवैदलौ ।
शरावकुर्द्दोऽभीराजो परुषश्चित्रशीर्षकः ॥
शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः ।
अष्टादशेति वायव्याः कीटाः पवनकोपनाः ।

तेषां दष्टलक्षणमाह—

तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः ॥

अग्निप्रकृतिकीटानाह—

कौण्डिल्यकः कणभको वरटी पत्रवृश्चिकः । (२०)
विनासिका ब्रह्मणिका बिन्दुलो भ्रमरस्तथा ॥
वाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः ।
पद्मकीटो दुन्दुभिको मकरः शतपादकः ।
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी ।
क्लीतः कृमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः ॥
एते ह्यग्निप्रकृतयश्चतुर्व्विंशाः प्रकीर्त्तिताः ।

---

(१९) वातप्रकोपणानां कुम्भीनसादीनां मध्ये शृङ्गी-चिच्चिटिङ्ग-शरावकुर्द्द-चित्र-शीर्षकान् वर्ज्जयित्वा शेषा श्चतुर्द्दश मुखसन्दंशविषाः ।

(२०) पित्तप्रकोपणानां मध्ये कौण्डिल्यक-वरटी-भ्रमर-पिच्चिट-वर्च्चःकीट-मकर-शतपद-पञ्चालक-पाकमत्स्य-कृष्णतुण्डान् विहाय शेषाश्चतुर्द्दश मुखसन्दंशविषाः ।

तेषां दष्टलक्षणमाह—

तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः ॥

सौम्यकीटानाह—

विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः । (२१)
सैरेयकः प्रचलको वलभः किटिमस्तथा ॥
सूचीमुखा कृष्णगोधा यश्च काषायवासिकः ।
कीटगर्द्दभकश्चैव तथा त्रोटक एव च ॥
त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः ।

दष्टलक्षणमाह—

तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः ॥

सर्व्वदोषप्रकृतिकान् कीटानाह—

तुङ्गीनासो विचिलकस्तालको वाहकस्तथा ।
कोष्ठागारी कृमिकरो यश्च मण्डलपुच्छकः ॥
तुङ्गनाभः सर्षपिकोऽवल्गुलो शम्बूकस्तथा ।
अग्निकीटाश्च घोराः स्युर्द्वादश प्राणनाशनाः ॥ (२२)

तेषां दष्टलक्षणमाह—

तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ।
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः ॥

---

(२१) श्लेष्मप्रकोपिनां मध्ये विश्वम्भर-प्रचलक-कृष्णगोधा-काषायवासिकांश्चतुरो वर्ज्जयित्वा नवान्ये मुखसन्दंशविषाः ।

(२२) वाहकसर्षपशम्बुकान् विहाय नव मुखसन्दंशविषाः ।

तीक्ष्णविषानां दष्टलिङ्गमाह—

क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ।
ज्वराङ्गमर्द रोमाञ्चवेदनाभिः समन्वितः ॥
छर्द्यतीसारतृष्णाश्च दाहो मोहो विजृम्भिका ।
वेपथुश्वासहिक्काश्च दाहः शीतश्च दारुणः ॥
पिड़कोपचयः शोफो ग्रन्थयो मण्डलानि च ।
दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च ।
तैर्भवन्तीह दष्टानां यथास्वञ्चाप्य पद्रवाः ॥
येऽन्ये तेषां विशेषास्तु तूर्णं तेषां समादिशेत् ।
दूषीविषप्रकोपाच्च तथैव विषलेपनात् ॥
लिङ्गं तीक्ष्णविषेष्वेतत् ।

मन्दविषाणां दष्टलक्षणमाह—

शृणु मन्दविषेष्वतः ।
प्रसेकोऽरोचकश्छर्दिः शिरोगौरवशीतता ॥
पिड़काकोठकण्डूनां जन्मदोषविभागतः ।

कीटदेहचूर्णानां नानौषधयोगात् तथानुलेपनतोऽपि गरत्वमाह—

योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत् ॥
दूषीविषप्रकाराणां तथैवाप्यनुलेपनात् ॥

वातपित्तकफसन्निपातप्रकृतीन् कीटान् निर्दिश्य एकलक्षणं चिकित्सार्थमाह—

एकजातीनतस्तूर्द्धं कीठान् वक्ष्यामि भेदतः । (२३)

(२३) अथ लाड्यायनोक्तःकीटानां सामान्यज्ञानोपायो लिख्यते । कटुभिर्विन्दु-

सामान्यतो दृष्टलिङ्गैः साध्यासाध्यक्रमेण च ॥

कणभजातिमाह—

त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः ।
चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः ।

दृष्टलिङ्गमाह—

तैर्दष्टस्य श्वयथुरङ्गमर्दो गुरुता गात्राणां
दंशः कृष्णश्च भवति ॥

गौधेरकजातिमाह—

प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः ।
तथा निरुपमश्चापि पञ्च गौधेरका स्मृताः ॥
गौधेरकलक्षणं तन्त्रान्तरे—
कृष्णसर्पेण गोधायां भवेत् यस्तु चतुष्पदः ।
सर्पो गौधेरको नाम तेन दष्टो न जीवति ।

---

लेखाभि पक्षैः पादैः मुखैः नखैः । शूकैः कण्टकलाङ्गूलैः संश्लिष्टैः पक्षरोमभिः । स्वनैः प्रमाणैः संस्थानैर्लिङ्गैश्चापि शरीरगैः । विषवीर्य्यैश्च कीटानां रूपज्ञानं विभाव्यते । अजाप्रतिमरूपो यः शूकहीनस्वरोमगः । मितः शरकुलीरस्तु चिड़ चूर्णविषः स्मृतः । गिरिकाभीमहाकीटः सपक्षोमार्ज्जितोदरः । खेचरोगुदशूकश्च कौण्डिल्य इति संस्मृतः । कुरण्डपुष्पवर्णाभः सपक्षोमार्ज्जितोदरः । कुण्डशूकविषः कीटः कोष्ठागारीति संज्ञितः । लाक्षारुधिरवर्णाभः श्वेतविन्दुविचित्रितः । क्षुद्रकीट्यग्निसङ्काशो भ्राजते निशि चाग्निवत् । कीटः खद्योत इत्युक्तो दष्टस्तेनापिदह्यते । दंष्ट्राविषः श्वेतविन्दुः सपक्षो हृदुःखकः । स तु वै शम्बूकोनाम कालकः सतनच्छदः । चतुष्पादो दीर्घ-पक्षो उन्नतादो बहुभजः । हृत्तालयो दन्तविषः ककनाल इति स्मृतः । चन्द्राभः कृकलासोऽन्य स्तद्भेदस्तु त्रिकण्टकः । ( निः सं )

दष्टलिङ्गमाह—

तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्।
रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः॥

गलगोलीजातिमाह—

गलगोली, श्वेतकृष्णा, रक्तराजी, रक्तमण्डला, सर्वश्वेता, सर्षपिकेत्येवं षट्।

दष्टलक्षणमाह—

ताभिर्दष्टे सर्षपिकावर्ज्जं दाहशोफक्लेदा भवन्ति। सर्षपिकया हृदयपीड़ातिसारश्च।

शतपदीजातिमाह—

शतपद्यस्तु—परुषा, कृष्णा, चित्रा, कपिलिका, पीतिका, रक्ता, श्वेता, अग्निप्रभा इत्यष्टौ।

दष्टलक्षणमाह—

ताभिर्दष्टे शोफो वेदना दाहश्च हृदये। श्वेताग्निप्रभाभ्यामेतदेव, दाहो मूर्च्छा चातिमात्रं श्वेतपिड़कोत्पत्तिश्च॥

मण्डूकजातिमाह—

मण्डूकाः—कृष्णः, सारः, कुहको, हरितो, रक्तो, यववर्णाभो, भृकुटी, कोटिकश्चेत्यष्टौ।

मण्डूकोत्पत्तिः कोटिकलक्षणन्तु तन्त्रान्तरोक्तं पठ्यते—वर्षमाणे सृजेच्छुक्रं प्रावृट्काले महेश्वरः। ततः शरत्-प्रतनूमायां भौ मण्डे जलस्थे हि। तस्मिन् मण्डोदके जाता

मण्डूकास्तेन संज्ञिताः। मण्डूकोगोपति स्तज्ज्ञैः कोटिकः परिकीर्त्तितः। तेन दष्टस्य मरणं नास्ति तस्य प्रतिक्रिया ।

सामान्येन दष्टलक्षणमाह—

तैर्दष्टस्य दंशकण्डूर्भवति पीतफेनागमश्च वक्त्रात् ।

भृकुटीकोटिकयोर्दष्टलक्षणमाह—

भृकुटीकोटिकाभ्यामेतदेव, दाहश्छर्द्दिर्मूर्च्छा चातिमात्रम् श्वेतपिड़कोत्पत्तिश्च ।

गौधेरकः स्थालिका च ये च श्वेताग्निसम्प्रभे ।
भृकुटीकोटिकश्चैव न सिध्यन्त्येकजातिषु ॥ (क)

सौम्यकीटानां विश्वम्भरादीनां दष्टलक्षणमाह—

विश्वम्भराभिर्दष्टे दंशः सर्षपाकाराभिः पिड़काभिश्चीयते, शीतज्वरार्त्तश्च पुरुषो भवति ।

पिपीलिकाजातीनां कीटानां नामान्याह—

पिपीलिकाः—स्थूलशीर्षा संवाहिका ब्राह्मणिका-(ऽ)ङ्गुलिका कपिलिका-चित्रवर्णेति षट् ।

तेषां दष्टलक्षणमाह—

ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ॥

मक्षिकाजातीनां कीटानां नामान्याह—

मक्षिकाः—कान्तारिका-कृष्णा-पिङ्गलिका-मधुलिका-काषायी-स्थालिकेत्येवं षट् ।

---

(क) गौधेरक इत्यादि। स्थालिकाचेति चकारेण काषायी समुच्चीयते। ये चेति चकारेण गलगोलिकेषु सर्षपिकानुक्त्या समुच्चीयते ।

तेषां दष्टलक्षणमाह—

ताभिर्दष्टस्य कण्डूशोफ-दाहरुजो भवन्ति। स्थालिका-काषायीभ्यामेतदेव। श्यावपिड़कोत्पत्तिरुपद्रवाश्च ज्वरादयो भवन्ति। काषायी स्थालिका च प्राणहरे।

मशकजातीनां कीटानां नामान्याह—

मशकाः—सामुद्रः, परिमण्डलो, हस्तिमशकः कृष्णः, पार्व्वतीय इति पञ्च।

तेषां दष्टलक्षणमाह—

तैर्दष्टस्य तीव्रा कण्डूर्दंशशोफश्च। पार्वतीयस्तु कीटैः प्राण-हरैस्तुल्यलक्षणः। नखावकृष्टेऽत्यर्थं पिड़काः सदाहपाका भवन्ति।

इति कीटसंख्यादष्टलक्षणविज्ञानीयोनामाष्टमोऽध्यायः।

---

## वृश्चिकलूता सविषजलौकासंख्यादष्टलक्षण-विज्ञानीयो नाम नवमोऽध्यायः।

वृश्चिकान् तत्प्रभवञ्च निर्द्दिशति—

त्रिविधा वृश्चिकाः प्रोक्ता मन्दमध्यमहाविषाः।
गोशकृत्कोथजा मन्दा मध्याः काष्ठेष्टिकोद्भवाः। (१)
सर्पकोथोद्भवास्तीक्ष्णा ये चान्ये विषसम्भवाः।

---

(१) गोशकृच्छब्दस्योपलक्षणत्वात् गोमहिषादिशकृन्मूत्रकोथजा मन्दाः।

तेषां पृथक् संख्यामाह—

मन्दा द्वादश मध्यास्तु त्रयः पञ्चदशोत्तमाः ।
दशविंशतिरित्येते संख्यया परिकीर्त्तिताः ॥

गयदासस्त्वाह—

त्रयोदश प्राणहरास्त्रयो मध्यास्तथापरे ।
मन्दवीर्य्या दशैकश्च वृश्चिकविषवेदिभिः ।
सप्तविंशति रित्येते संख्यया परिकीर्त्तिताः ।

वृश्चिकानां मन्दविषाणां लक्षणकर्म्मण्याह—

कृष्णः श्यावः कर्बुरः पाण्डुवर्णो गोमूत्राभः कर्कशो मेचकश्च ।(२)
श्वेतो रक्तो रोमशः शाद्वलाभो रक्तश्चैते मन्दवीर्य्या मतास्तु ॥
एभिर्दष्टे वेदना वेपथुश्च गात्रस्तम्भः कृष्णरक्तागमश्च ।
शाखादष्टे वेदना चोर्द्धमेति दाहस्वेदौ दंशशोफो ज्वरश्च ॥

वृश्चिकानां मध्यविषानां लक्षणप्रभवकर्म्माण्याह—

रक्तः पीतः कापिलेनोदरेण सर्वे धूम्राः पर्वभिश्च त्रिभिः स्युः ।(३)

---

(२) कृष्णादयो द्वादश श्वेतेनोदरेणोपलक्षिताः। वेदनाचोर्द्धमेतीति त्रिविधाना-मपिवृश्चिकानां सामान्यलक्षणमेव प्रायोवृत्त्याभिहितम्। वृश्चिकेभ्यो मन्दविषा वृश्चिका बहुतरै पर्व्वभिरुपलक्षिता भवेयुः ।

(३) रक्त इत्यादि। कपिलेन सह रक्तपीतश्चेति त्रयः। एते त्रयोऽप्युदरेण धूम्राः। पूर्व्वं मध्याः काष्ठेष्टिकोद्भवा इत्युक्तं इहतु सर्पमूत्रोच्चारादिसम्भवत्वं इत्युभय-हेतूपादानात् व्यस्तसमस्तोभयहेतूद्भवत्वं मध्यानां बोद्धव्यम्। दिग्धविद्धसर्पदष्टानाञ्च शरीरकोथे मध्यानां वृश्चिकानां जन्म मतान्तरप्रतिपादितमेव। विप्रकारोरगाणामिति। दर्व्वीकरादिभेदेन विप्रकाराणामेतेषां यस्मान्वयाद यो यादृक् प्रसूतः स तत्स्वरूपां दोषोत्पत्तिं कुर्य्यात्। ( निः सं )

एते मूत्रोच्चारपूत्यण्डजाता मत्या ज्ञेयास्त्रिरकारोरगाणाम् ॥
यस्यैतेषामन्वयाद् यः प्रसूतो दोषोत्पत्तिं तत्स्वरूपस्य कुर्य्यात् ।
जिह्वाशोफो भोजनस्यावरोधो मूर्च्छा चोग्रा मत्यवोर्य्याभिदष्टे ॥

वृश्चिकानां तीक्ष्णविषाणां लक्षणप्रभवकर्म्माख्याह—

श्वेतश्चित्रः श्यामलो लोहिताभो रक्तः श्वेतो रक्तनीलोदरौ च ।
पीतो रक्तो नीलपीतोऽपरस्तु रक्तो नीलो नीलशुक्लस्तथा च ॥
रक्तो वभ्रुः पूर्ववच्चैकपर्वा यश्चापर्वा पर्वणी द्वे च यस्य । (४)
नानारूपा वर्णतश्चापि घोरा ज्ञेयाश्चैते वृश्चिकाः प्राणचौराः ॥
जन्मैतेषां सर्पकोथात् प्रदिष्टं देहेभ्यो वा घातितानां विषेण ।
एभिर्दष्टे सर्पवेगप्रवृत्तिः स्फोटत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च ॥
खेभ्यः कृष्णं शोणितञ्चापि तीव्रं तस्मात् प्राणैस्त्यज्यते शीघ्रमेव ॥

लूताप्रभवमाह—

विश्वमित्रो नृपवरः कदाचिदृषिसत्तमम् ।
वशिष्ठं कोपयामास गत्वाश्रमपदं किल ॥
कुपितस्य मुनेस्तस्य ललाटात् स्वेदविन्दवः ।
अपतन् दर्शनादेवमधस्तात् तीक्ष्णवर्च्चसः ।
लूने तृणे महर्षीणां धेन्वर्थं संभृतेऽपि च ॥
ततो जातास्त्विमा घोरा नानारूपा महाविषाः ।

---

(४) पूर्व्ववच्चेति। पूर्व्वे मत्स्यकीटे यथा जिह्वाशोथभोज्यावरोधमूर्च्छा स्युस्तथापि। एकपर्व्वेति। द्वयोः सन्धिस्थानयोः सङ्घातः पर्व, एकं पर्व यस्य स एकपर्वा। पर्व्वणी द्वे च यस्येति चकारेण वहूनि पर्व्वाणि भवन्तीति समुच्चीयते। खेभ्यः मुखगुदादिमार्गेभ्यः।

अपकाराय वर्त्तन्ते नृपसाधनवाहने ॥
यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदविन्दवः ।
तस्माल्लूतेति भाष्यन्ते

लूतानां संख्यामाह—

संख्यया ताश्च षोड़श ॥

तीक्ष्णमध्यमन्दविषानां लूतानां कालावधिमाह—

यास्तीक्ष्णचण्डोग्रविषा हि लूतास्ताः सप्तरात्रेण विनाशयन्ति ।
अतोऽधिकेनापि निहन्युरन्या यासां विषं मध्यमवीर्य्यमुक्तम् ॥
यासां कनीयो विषवीर्य्यमुक्तं ताः पक्षमात्रेण विनाशयन्ति ।
तस्मात् प्रयत्नं भिषगत्र कुर्य्यदा-दंशपाताद्विषघातियोगैः ॥

लूतानां सप्त विषाधिष्ठानान्याह—

विषन्तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण ।
सप्तप्रकारं विसृजन्ति लूतास्तदुग्रमध्यावरवीर्य्ययुक्तम् ॥

लालाक्षतदंश-लक्षणमाह—

सकण्डुकोठं स्थिरमल्पमूलं लालाक्षतं मन्दरुजं वदन्ति ।

नखाग्र-क्षतदंश-लक्षणमाह—

शोफश्च कण्डूश्च पुलानिका च धूमायनञ्चैव नखाग्रदंशे ॥

मूत्र-क्षतदंश-लक्षणमाह—

दंशन्तु मूत्रेण सकृष्णमध्यं सरक्तपर्य्यन्तमवेहि दीर्णम् ।

दंष्ट्रा-क्षतदंश-लक्षणमाह—

दंष्ट्राभिरुग्रं कठिनं विवर्णं जानीहि दंशं स्थिरमण्डलञ्च ॥

रजःपुरीषेन्द्रियकृतदंश-लक्षणमाह—

रजःपुरीषेन्द्रियजं हि विद्धि स्फोटं विपक्वामलपीलुपाण्डुम् ॥

कृच्छ्रसाध्यासाध्यभेदेन विभागमाह—

कृच्छ्रासाध्यास्तथाऽसाध्या लूतास्तु द्विविधाः स्मृताः ।
तासामष्टौ कृच्छ्रसाध्या वर्ज्ज्यास्तावत्य एव तु ॥

तासु कृच्छ्रसाध्यानामष्टानां नामान्याह—

त्रिमण्डला तथा श्वेता कपिला पीतिका तथा ।
आलमूत्रविषा रक्ता कसना चाष्टमी स्मृताः ॥

तासां दष्टलक्षणमाह—

ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना ।
भवन्ति च विशेषेण गदाः श्लैष्मिकवातिकाः ॥

असाध्यानां अष्टानां नामान्याह—

सौवर्णिका लाजवर्णा जालिन्येणीपदी तथा ।
कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता ॥

तासां दष्टलक्षणमाह—

ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥

सामान्यतः दष्टलक्षणमाह—

पिड़का विविधाकारा मण्डलानि महान्ति च ।
शोफा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥
सामान्यं सर्वलूतानामेतदादंशलक्षणम् ।

त्रिमण्डलादीनां दष्टलक्षणं सचिकित्सितं प्रस्तूयते ।

विशेषलक्षणं तासां वक्ष्यामि सचिकित्सितम् ॥

त्रिमण्डलाया दष्टलक्षणमाह—

त्रिमण्डलाया दंशेऽसृक् कृष्णं स्रवति दीर्य्यते ।
वाधिर्य्यं कलुषा दृष्टिस्तथा दाहश्च नेत्रयोः ॥

श्वेताया दष्टलक्षणमाह—

श्वेतायाः पिड़का दंशे श्वेता कण्डूमती भवेत् ।
दाहमूर्च्छाज्वरवती विसर्पक्लेदरुक्करी ।

कपिलाया दष्टलक्षणमाह—

आदंशे पिड़का ताम्रा कपिलायाः स्थिरा भवेत् ।
शिरसो गौरवं दाहस्तिमिरं भ्रम एव च ।

पीतिकाया दष्टलक्षणमाह—

आदंशे पीतिकायास्तु पिड़का जायते स्थिरा ।
तथा च्छर्द्दिर्ज्वरः शूलं रक्ते स्याताञ्च लोचने ॥

आलविषाया दष्टलक्षणमाह—

रक्तमण्डनिभे दंशे पिड़काः सर्षपा इव ।
जायन्ते तालुशोषश्च दाहश्चालविषान्विते ।

मूत्रविषाया दष्टलक्षणमाह—

पूतिमूत्रविषादंशो विसर्पी कृष्णशोणितः ।
कासश्वासवमीमूर्च्छा ज्वरदाहसमन्वितः ।

रक्ताया दष्टलक्षणमाह—

दंशश्च पाण्डुपिड़को दाहक्लेदसमन्वितः ।
रक्ताया रक्तपर्य्यन्तो विज्ञेयो रक्तसंयुतः ।

कसनाया दष्टलक्षणमाह—

पिच्छिलं कसनादंशाद्रुधिरं शीतलं स्रवेत् ।
कासश्वासौ च—

कृष्णाया दष्टलक्षणमाह—

पुरीषगन्धिरल्पासृक् कृष्णाया दंश एव तु ।
ज्वरमूर्च्छावमीदाह-काशश्वाससमन्वितः ।

अग्निवर्णाया दष्टलक्षणमाह—

दंशे दाहोऽग्निवर्णायाः स्रावोऽत्यर्थं ज्वरस्तथा ।
चोषकण्डू रोमहर्षौ दाहश्च स्फोटजन्म च ॥

अष्टाखसाध्यासु कृष्णादिषु लूतासु कृष्णाग्निवर्णयोर्द्वयोः कादाचित्कक्रृच्छ्रसाध्ययोर्दष्टलक्षणमभिधाय संप्रति अवार्य्यविषवीर्य्याणां षसां दष्टलक्षणमुद्दिशन्नाह—

अवार्य्यविषवीर्य्याणां लक्षणानि निबोध मे

सौवर्णिकाया दष्टलक्षणमाह—

आध्मातः सौवर्णिकादंशः सफेनो मत्स्यगन्धकः ।
कासश्वासौ ज्वरतृष्णा मूर्च्छा चात्र सुदारुणा ॥

लाजवर्णाया दष्टलक्षणमाह—

आदंशे लाजवर्णाया आमं पूति स्रवेदसृक् ।
दाहो मूर्च्छातिसारश्च शिरोदुःखञ्च जायते ॥

जालिन्या दष्टलक्षणमाह—

घोरदंशस्तु जालिन्या राजिमानवदीर्य्यते।
स्तम्भः श्वासस्तमोवृद्धिस्तालुशोषश्च जायते॥

एणीपद्या दष्टलक्षणमाह—

एणीपद्यास्तथादंशो भवेत् कृष्णतिलाकृतिः।
तृष्णामूर्च्छाज्वरच्छर्द्दि-कासश्वाससन्वितः॥

काकान्ताया दष्टलक्षणमाह—

दंशः काकाण्डकादष्टे पाण्डुरक्तोऽतिवेदनः॥

मालागुणाया दष्टलक्षणमाह—

रक्तो मालागुणादंशो धूमगन्धोऽतिवेदनः।
विदीर्य्यते च बहुधा दाहमूर्च्छाज्वरान्वितः॥

जलौकसां निरुक्तिमाह—

जलमासामायुरिति जलायुकाः। जलमासामोक इति जलौकसः।

सविषाणां संख्यां नाम चाह—

सविषाः षट्—कृष्णा, कर्व्वुरा, अलगर्द्दा, इन्द्रायुधा, सामुद्रिका, गोचन्दनाचेति।

तासां प्रत्येकं लक्षणमाह—

तासु अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा। वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्व्वुरा। रोमशा महापार्श्वा कृष्णमुखी अलगर्द्दाः। इन्द्रायुधवत् ऊर्द्धराजिभिश्चित्रिता इन्द्रायुधाः। ईषद-

सितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिकाः। गोवृषणवत् अधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति ।

तासां दष्टलक्षणमाह—

ताभिर्दष्टे पुरुषे दंशे श्वयथु रतिमात्रं, कण्डूमूर्च्छा ज्वरो-दाहश्छर्दिर्मदः सदनं श्वित्रोत्पत्तिरिति लिङ्गानि भवन्ति ।

इति वृश्चिक लता-जलौका-संख्या-दष्टलक्षण-विज्ञानीयो नाम नवमोऽध्यायः ।

---

## गर-दूषीविष-विज्ञानीयो नाम दशमोऽध्यायः ।

गरविषस्य निरुक्तिमाह—

नानाप्राण्यङ्गशकृतां विरुद्धौषधिभस्मनाम् । (१)
विषाणां मन्दवीर्य्याणां योगोगर इति स्मृतः ।

तयोरुपयोगं दर्शयति—

सौभाग्यार्थं स्त्रियोभर्त्रे राज्ञे वारातिचोदिताः ।
गरमाहारसंयुक्तं यच्छन्त्यासन्नवर्त्तिनः ।

---

(१) विषं विविधं स्थावरं जङ्गमं गरसंज्ञञ्च। आद्यं द्वयं प्रोक्तं संप्रति गरसंज्ञं विषमाह नानेति। प्राण्यङ्गं नखलोमादि। शकृद्ग्रहणं नानाम्वेदरक्तार्त्तवनिष्ठी-वनोपलक्षणम्। निर्व्विषद्रव्यभूतं गरविष मुक्त्वा सविषं गरमाह विषाणामिति ।

गरविषलक्षणमाह—

तेन पाण्डुः कृशोऽल्पाग्निः कासश्वासज्वरार्द्दितः
वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः
महोदरयकृत्प्लीहो दीनवाग्दुर्ब्बलोऽलसः।
शोफवान् सतताध्मातः शुष्कपादकरः क्षयी।
स्वप्ने गोमायुमार्ज्जारनकुलव्यालवानरान्।
प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान्।
मन्यते कृष्णमात्मानं गौरो गौरं च कालकः।
विकर्णनासानयनं पश्येत् तद्‌विहतेन्द्रियः।
एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः।
गरार्त्तो नाशमाप्नोति कश्चित् सद्योऽचिकित्सितः।

दशगुणान्वितस्य सर्व्वविषस्य सद्योव्यापादकत्वमाह—

स्थावरं जङ्गमं यच्च कृत्रिमञ्चापि यद्विषम्।
सद्यो व्यापादयेत्तत्तु ज्ञेयं दशगुणान्वितम्।

विषं यथाद्‌दूषीविषसंज्ञां लभते तदाह—

यत् स्थावरं जङ्गमकृत्रिमं वा देहादशेषं यदनिर्गतं तत्।
जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा॥
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति। (२)

दूषीविषस्य निरुक्तिमाह—

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः।
यस्माद्‌दूषयते धातून् तस्माद्‌ दूषीविषं स्मृतम्॥

---

(२) दूषीविषं न विषान्तरं, त्रिविधमपि विषं हेतुवशाद्‌ वीर्य्यहीनं दूषीविषसंज्ञां लभते।

दूषीविषं यत् करोति तदाह—

वीर्य्याल्पभावान्न निपातयेत् तत् कफावृतं वर्षगणानुबन्धि ॥
तेनार्द्दितो भिन्नपुरीषवर्णो विगन्धवैरस्यमुखः पिपासी ।
मूर्च्छन् वमन् गद्गदवाग्विपन्नो भवेच्च दूष्योदरलिङ्गजुष्टः ॥

स्थानविशेषेण दूषीविषस्य कर्म्मविशेषमाह—

आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी ।
भवेन्नरो ध्वस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः ॥

रसादिधातुस्थितस्य तस्यैव लक्षणान्यतिदिशन्नाह—

स्थितं रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान् ।

तस्य प्रकोपे हेतुमाह—

कोपञ्च शीतानिलदुर्द्दिनेषु यात्याशु पूर्व्वं शृणु तस्य रूपम् ॥

प्रकुपितस्य तस्य लिङ्गमाह—

निद्रागुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाङ्गमर्द्दः ।
ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठमोहान् ॥
धातुक्षयं पादकरास्यशोफं दकोदरं छर्द्दिमथातिसारम् ।
वैवर्ण्यमूर्च्छाविषमज्वरान् वा कुर्य्यात् प्रवृद्धां प्रबलां तृषां वा ॥
उन्मादमन्यज्जनयेत् तथाऽन्यदानाहमन्यत् क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान् विकारांश्च बहुप्रकारान् ॥

इति गर-दूषीविष-विज्ञानीयो नाम दशमोऽध्यायः ।

---

# विषजुष्टान्नपानशय्यासनादिविज्ञानीयो नामैकादशोऽध्यायः ।

विषजुष्टानां क्षीरमद्यादिद्रवद्रव्याणां लक्षणमाह—

द्रवद्रव्येषु सर्व्वेषु क्षीरमद्योदकादिषु ।
भवन्ति विविधा राज्यः फेनबुद्बुदजन्म च ॥

तत्र सविषमन्नं स्राव्यमानमविस्राव्यं भवति, चिरेण पच्यते, पक्वं च सद्यः पर्युषितमिव निरूष्म स्तब्धं च जायते, यथास्ववर्णगन्धरसैर्व्यापद्यते प्रक्लिद्यते चन्द्रिकाचितञ्च भवति । व्यञ्जनानामाशु शुष्कत्वं भवति । क्वाथस्य ध्यामता । हीनातिरिक्तविकृतानां चात्र छायानां दर्शनमदर्शमेव वा । फेनपटलसीमन्तकोर्द्ध्वविविधराजितन्तुबुद्बुदप्रादुर्भावः । लवणोल्वणे फेनमाला । रसस्य मध्ये नीला राजी । पयसस्ताम्रा । मद्यतोययोः काली । दध्नः श्यावा । तक्रस्यानीलपीता । मस्तुनः कपोताभा । धान्याम्लस्य कृष्णा । द्रवौषधस्य कपिला । घृतस्यसलिलाभा । क्षौद्रस्य हरिता । तैलस्यारुणा वसागन्धश्च । द्रव्यानामार्द्रानां सहसा म्लानत्वं अन्यत्वभावः । शुष्कानां श्यावता वैवर्ण्यञ्च । कठिनानां मृदिमा । मृदूनां कठिनत्वं ।

विषजुष्टानां मद्यादीनां विम्बोद्ग्राहित्वमाश्रित्याह—

छायाश्चात्र न दृश्यन्ते दृश्यन्ते यदि वा पुनः ।
भवन्ति यमलाश्छिद्रास्तन्वयो वा विकृतास्तथा ॥

राज्ञोऽरिदेशे रिपवस्तृणाम्बु-मार्गान्नधूमश्वसनान् विषेण ।
संदूषयन्त्येभिरतिप्रदुष्टान् विज्ञाय लिङ्गैरभिशोधयेच्च ॥

विषदुष्टजलस्य लक्षणमाह—

दुष्टं जलं पिच्छिलमुग्रगन्धि फेनान्वितं राजिभिरावृतञ्च ।
मण्डूकमत्स्यं म्रियते विहङ्गा मत्ताश्च सानूपचरा भ्रमन्ति ॥
मज्जन्ति ये चात्र नराश्वनागास्ते च्छर्दिमोहज्वरदाहशोफान् ।
गच्छन्ति तेषामपहृत्य दोषान् दुष्टं जलं शोधयितुं यतेत

विषजुष्टानां चितितृणधूमानिलानां लक्षणमाह—

क्षितिप्रदेशं विषदूषितन्तु शिलास्थलीं तीर्थमथेरिणं वा ॥
स्पृशन्ति गात्रेण तु येन येन गोवाजिनागोष्ट्रखरा नरा वा ।
तच्छूनतां यात्यथ दह्यते च विशीर्य्यते रोमनखास्तथैव ॥
तृणेषु भक्तेषु च दूषितेषु सीदन्ति मूर्च्छन्ति वमन्ति चान्ये ।
विड्भेदमृच्छन्त्यथवा म्रियन्ते तेषां चिकित्सां प्रणयेद्यथोक्ताम्
धूमेऽनिले वा विषसम्प्रयुक्ते खगाः श्रमार्त्ताः प्रपतन्ति भूमौ ।
कासप्रतिश्यायशिरोरुजश्च भवन्ति तीव्रा नयनामयाश्च ॥

विषजुष्टानां शाकमांसादीनां लक्षणमाह—

शाकसूपान्नमांसानि क्लिन्नानि विरसानि च ।
सद्यः पर्य्युषितानीव विगन्धानि भवन्ति च ॥

विषजुष्टानां फलानां लिङ्गमाह—

गन्धवर्णरसैर्हीनाः सर्व्वे भक्ष्याः फलानि च ।
पक्वान्याशु विशीर्य्यन्ते पाकमामानि यान्ति च ॥

दन्तकाष्ठगतविषलक्षणमाह—

विशीर्य्यते कूर्च्चकस्तु दन्तकाष्ठगते विषे ।
जिह्वादन्तौष्ठमांसानां श्वयथुश्चोपजायते ॥

जिह्वानिर्लेखकवलयो विषलक्षणमतिदिशन्नाह—

जिह्वानिर्लेखकवलौ दन्तकाष्ठवदादिशेत् ॥

विषदूषितस्याभ्यङ्गस्य लिङ्गमाह—

पिच्छिलो बहुलोऽभ्यङ्गो विवर्णो वा विषान्वितः ।
स्फोटजन्म रुजास्राव स्त्वक्पाकः स्वेदनं ज्वरः ॥
दरणञ्चापि मांसानामभ्यङ्गे विषसंयुते ।

विषजुष्टानामुत्सादनादीनां लिङ्गमतिदिशन्नाह—

उत्सादने परीषेके कषाये चानुलेपने ।
शय्यावस्त्रतनुत्रेषु ज्ञेयमभ्यङ्गलक्षणैः ॥

विषजुष्टस्य लेपनस्य लक्षणमाह—

केशशातः शिरोदुःखं खेभ्यश्च रुधिरागमः ।
ग्रन्थिजन्मोत्तमाङ्गेषु विषजुष्टे तु लेपने ॥

विषजुष्टस्य मुखलेपस्य लक्षणमाह—

मुखलेपे मुखं श्यावं युक्तमभ्यङ्गलक्षणैः ।
पद्मिनीकण्टकप्रख्यैः कण्टकैश्चोपचीयते ॥

विषपीतस्य हस्तिनो लक्षणमाह—

अस्वास्थ्यं कुञ्जरादीनां लालास्रावोऽचिरक्तता ।
स्फिक्पायुमेढ्रमुष्केषु युक्तेषु स्फोटसम्भवः ॥

विषजुष्टयोर्नस्यधूमयोर्लिङ्गमाह—

शोणितागमनं खेभ्यः शिरोरुक् कफसंस्रवः ।
नस्यधूमगते लिङ्गमिन्द्रियाणान्तु वैकृतम् ॥

विषजुष्टस्य पुष्पस्य लिङ्गं तज्जिघ्रतश्च लक्षणं—

गन्धहानिर्विवर्णत्वं पुष्पाणां म्लानता भवेत् ।
जिघ्रतश्च शिरोदुःखं वारिपूर्णे च लोचने ॥

विषजुष्टस्य कर्णतैलस्य लिङ्गमाह—

कर्णतैलगते श्रोत्रवैगुण्यं शोफवेदने ।

विषजुष्टस्याञ्जनस्य लिङ्गमाह—

अञ्जने विषसंसृष्टे भवेदान्ध्यमथापि वा ॥

विषजुष्टयोः पादुकयोर्लिङ्गम्—

शोफः स्रावस्तथा स्वापः पादयोः स्फोटजन्म च ।
भवन्ति विषजुष्टाभ्यां पादुकाभ्यामसंशयम् ॥

इति विषजुष्टान्नपानशय्यासनादिविज्ञानीयो नाम
एकादशोऽध्यायः ।

---

## अथ विषजुष्टान्नपानादि-परीक्षानाम
## द्वादशोऽध्यायः ।

विषदातृज्ञानमुद्दिशन्नाह—

इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ।
विद्याद्विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥

न दद्यात्युत्तरं पृष्टो विवच्चन् मोहमेति च ।
अपार्थं बहु सङ्कीर्णं भाषते चापि मूढ़वत् ॥
स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद् वसेत् ।
वेपथुर्जायते तस्य त्रस्तश्चान्योन्यमोच्चते ॥
च्चामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि ।
आलभेतासकृद्दीनः करेण च शिरोरुहान् ॥
निर्यियासुरपद्वारैर्वीच्चते च पुनःपुनः ।
वर्त्तते विपरीतस्तु विषदाता विचेतनः ॥
केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया ।
असतामपि सन्तोऽपि चेष्टां कुर्वन्ति मानवाः ॥
तस्मात् परीच्चणं कुर्य्यादन्नादिष्वपि बुद्धिमान् ।

वर्ज्जनार्थं विषकन्यायाः परीच्चामाह—

नच कन्यामविदितां संस्पृशेदपरीच्चिताम् ।
विविधान् कुर्वते योगान् कुशलाः खलु मानवाः ।
आजन्मविषसंयोगात् कन्या विषमयी कृता ।
स्पर्शोच्छासादिभिर्हन्ति तस्यास्त्वेतत् परीच्चणम् ।
तन्मस्तकस्य संस्पर्शात् म्लायेते पुष्पपल्लवौ ।
शय्यायां मत्कुणैर्वस्त्रे यूकाभिः स्नानवारिणा ।
जन्तुभिर्म्रियते ज्ञात्वा तामेवं दूरतस्त्यजेत् ।

विषजुष्टस्यान्नस्य अग्निना परीच्चामाह—

हुतभुक्तेन चान्नेन भृशं चटचटायते ।

मयूरकण्ठप्रतिमो जायते चापि दुःसहः।
भिन्नार्च्चिस्तीक्ष्णधूमश्च न चिराच्चोपशाम्यति ॥ (क)

स्नेहलवणयोगादग्निरपीत्थं स्यादतो पक्षिभिः परीक्षामाह—

चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु। (ख)
दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः॥
कोकिलः स्वरवैकल्यं क्रौञ्चस्तु मदमृच्छति।
हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके॥
हंसः क्ष्वेड़ति चात्यर्थं भृङ्गराजस्तु कूजति।
पृषतो विसृजन्त्यश्रु विष्ठां मुञ्चति मर्कटः॥
सन्निकृष्टांस्ततः कुर्याद्राजन्स्तान् मृगपक्षिणः।
वेश्मनोऽथ विभूषार्थं रक्षार्थञ्चात्मनः सदा॥

---

(क) हुतभुक् वह्निः सविषमन्नं प्राप्य चटचटायते। मयूरकण्ठप्रतिम इति इन्द्रधनुर्वत् नानावर्णधूमार्च्चिः। दुःसह उग्रगन्धत्वादित्यर्थः। भिन्नार्च्चिरिति विच्छिन्न-ज्वालावान्। केचिदेकावर्त्त इति पठन्ति, संहत-सर्व्वज्वालत्वादेक एवावर्त्तो यस्यासौ एकावर्त्तः। तीक्ष्ण-धूमश्चेति कुणपगन्धत्वेन तीक्ष्णो धूमो यस्य। निदर्शनञ्चेदं अनर्चिरप्यग्नि धूमोऽप्यस्य प्रसेकरोमहर्ष शिरोवेदनापीनसदृष्ट्याकुलता अभ्युत्पादयन्ति। न चिराच्चोपशाम्यतीति अग्निश्चिरं धूमसुद्वमतीत्यर्थः।

(ख) विषसंसृष्टमन्नं दृष्ट्वा चकोरादीनां ये चेष्टाविशेषा जायन्ते तानाह चकोरस्याक्षि-वैराग्यमिति। अक्षिवैराग्यं अवलोकने अलसत्वं, विरक्तता अक्ष्णोरिति वा। जीवजीवकः पक्षिविशेषः। मदमृच्छति हर्षं याति। मयूर उद्विग्नश्चलितः सन् तुष्येत्। विजिरिह न भयार्थः हृष्येदित्यनेन सह विरोधात्। क्रोशतः उच्चैः रोदनशब्दं कुरुतः। क्ष्वेड़ति चात्यर्थमिति अतिशयेन शब्दं करोति। कूजति अव्यक्तं शब्दायते। पृषतो मृगा नेत्रजलं मुञ्चन्ति। दृष्ट्वान्नं विषसंसृष्टमिति सर्व्वत्र योजनीयम्।

रसेनान्नस्य विषजुष्टस्य ज्ञानमाह—

नृपभक्ताद् बलिं न्यस्तं सविषं भक्षयन्ति ये ।
तत्रैव ते विनश्यन्ति मक्षिका वायसादयः । (ग)

भोक्तुं दत्तस्य तस्य वाष्पेनैव विषज्ञानमाह—

उपक्षिप्तस्य चान्नस्य वाष्पेनोर्द्ध्वं प्रसर्पता ।
हृत्पीड़ा भ्रान्तनेत्रत्वं शिरोदुःखञ्च जायते ।

स्पर्शेनैव विषज्ञानमाह—

पाणिप्राप्तं पाणिदाहं नखशातं करोति च । (घ)

मुखगतस्य ज्ञानमाह—

स चेत् प्रमादान्मोहाद्वा तदन्नमुपसेवते ।
अष्ठीलावत्ततो जिह्वा भवत्यरसवेदिनी । (ङ)

सविषमन्नं आमाशयगतं यत् करोति तदाह—

तुद्यते दह्यते चापि श्लेष्मा चास्यात् प्रसिच्यते । (च)
मूर्च्छां छर्दिमतीसार माध्मानं दाहवेपथू ।
इन्द्रियाणाञ्च वैकृत्यं कुर्य्यादामाशयं गतम् ।

---

(ग) सविषेऽन्ने मक्षिका न निलीयन्ते । लीनास्तु सद्यो म्रियन्ते । विषजुष्टान्नाहारात् काकः क्षामस्वरो भवति म्रियते वा । मानुषेन भक्षितञ्चेत् मनोमोहः संज्ञाभ्रंशः श्लेष्मनिष्ठीवनञ्च जायते ।

(घ) निदर्शनञ्चेदं कण्डूदाहोषाज्वरार्त्तिस्फोटनुप्तिरोमच्युतीर्जनयति ।

(ङ) अन्यत्राप्युक्तं—लालाजिह्वौष्ठयोर्जाड्यमूषा विमर्चिमायनम् । दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ।

(च) स्वेदः, मदः, रोमहर्षः चक्षुर्दश-रोधनमित्यपि पठनीयम् ।

पक्काशयगतं यत् करोति तदाह—

दाहं मूर्च्छा मतीसारं तृणामन्द्रिय-वैकृतम् । (१)
आटोपपाण्डुतां कार्श्यं कुर्य्यात् पक्काशयं गतम् ।

तस्य प्रयत्नेन वर्ज्जनमाह—

इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ।
यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः ।

इति विषजुष्टान्नपानादि परीक्षा नाम द्वादशोऽध्यायः ।

---

## विषवैद्यगुणकर्त्तव्यविज्ञानीयो नाम त्रयोदशोऽध्यायः ।

धन्वन्तरिः काशिपतिस्तपोधर्म्मभृतां वरः ।
सुश्रुतप्रभृतीन् शिष्यान् शशासाहतशासनः ॥
रिपवो विक्रमाक्रान्ता ये च स्वे कृत्यतां गताः ।
सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम् ॥
विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः ।
स्त्रियो वा विविधान् योगान् कदाचित् सुभगेच्छया ॥
विषकन्योपयोगाद्वा क्षणाज्जह्यादसून् नरः ।
तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः ॥

---

(१) उक्तञ्चान्यत्र—विन्दुभिश्चाचयोऽङ्गानां पक्काशयगते पुनः । अनेकवर्णं वमति मूत्रयत्यतिसार्य्यते ।

यस्माच्च चेतोऽनित्यत्वमश्ववत् प्रथितं नृणाम् ।
न विश्वसेत् ततो राजा कदाचिदपि कस्यचित् ॥

यदुक्तमन्यत्र—

ईश्वराणां वसुमतां विशेषेण तु भूभुजां प्रायेण मित्रेभ्यो ऽप्यमित्रा भूयांसो भवन्ति । ततस्तत्-प्रयुक्ताः समासन्नवर्त्तिनो ऽन्नपानादिषु विषं प्रयच्छन्ति । स्त्रियश्च तत्प्रनिधिप्रयुक्ताः सौभाग्यलोभेन ।

वैद्यगुणानाह—

कुलीनं धार्म्मिकं स्निग्धं सुभृतं सततोत्थितम् ।
अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥
क्रोधपारुष्यमात्सर्य्य-मदालस्यविवर्ज्जितम् ।
जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् ॥
मेधाविनमसंभ्रान्तमनुरक्तं हितैषिणम् ।
पटुं प्रगल्भं निपुणं दक्षं मायाविवर्ज्जितम् ॥
पूर्व्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् ।
महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् ॥

अन्यताप्युक्तं—

वाक्यार्थाववोधकुशलं निष्णातमष्टाङ्गे यथाम्नायमायुर्व्वेदे सुविहितयोगक्षेमं सात्मयज्ञं प्राणाचार्य्यं परिगृह्णीत । तमर्थ-मानाभ्यां यथाकालं गुरुमिव शिष्यः पितरमिव पुत्त्रः पूजयेत् । प्रतिकूलमपि तद्वचः साम्प्रतं मतमिति प्रतिमन्येत । नहि भद्रोऽपि गजपति र्निरङ्कुशः श्लाघनीयो जनस्य । तस्मात्

तदायत्तमाहारविहारं प्रति आत्मानं कुर्य्यात्। उपात्तं खलु-जीवितमुपायबलेन स्वसमयमधितिष्ठति। अपिच बहुपरिग्रहा नरपतयः। सन्ति चाशुकारिणः शूलसंन्यासादयः। प्रतिक्षणं प्रत्यवेक्षणीयावस्थाश्च रोगिणो विशेषेण राजानः। ते हि प्रमादपरिगता दुःखासहिष्णवश्च स्वयमप्यपथ्यरुचयः सन्निहिताहितप्रियवचनप्रायपरिवाराश्च। तस्माद्भिषजो राजगृहासन्ने निवेशनं कारयेत्। तथाहि सर्व्वोपकरणेषु नृपतिशरीरोपयोगिष्वपरोक्षवृत्ति र्भवति। स सम्यक् सम्पन्नमन्नं सुपरीक्षितं विशुद्धमग्न्यादिषु प्रागुपनीतं शिखिना दृष्टमभिप्रोक्षितं प्रोक्षणैः पुरोस्थितो राजानं हस्तवद्भौषधिरन्नं भोजयेत्।

यादृशं महानसं कार्य्यं तदाह—

प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि। (क)
सजालकं गवाक्षाढ्यमाप्तवर्गनिषेवितम्॥
विकक्षमृष्टसंसृष्टं सवितानं कृतार्च्चनम्।
परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम्॥

महानसाध्यक्षं विशिनष्टि—

तत्राध्यक्षं नियुञ्जीत प्रायो वैद्यगुणान्वितम्।

---

(क) प्रशस्तशब्देन आग्नेयी दिक् गुण सम्पदा शस्तोदेशश्च गृह्यते। भाण्डं पाकपात्रं भोजनपात्रञ्च। महत् न तु सङ्कीर्णं, सजालकं जालक-सहितं, गवाक्षाढ्यं वातायनबहुलं। कक्षः शुष्कतृणं तृणस्थानवर्ज्जितमित्यर्थः। वितानं चन्द्रातपः तद्युक्तं गृहधूम कीटादिपतन-वारणार्थं। कृतार्च्चनमिति महानसे अग्निपूजा कार्य्या।

परिकर्म्मिण गुणानाह—

शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः ॥
संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः ।
स्नाता दृढ़ं संयमिनः कृतोष्णीषाः सुसंयुताः ।
तस्य चाज्ञाविधेयाः स्युर्विविधाः परिकर्म्मिणः ॥
माहानसिकवोढ़ारः सौपौदनिक-पौपिकाः ।
भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन ।

वैद्यस्य सावधानत्वं सोपपत्तिकमाह—

आहारस्थितयश्चापि भवन्ति प्राणिनो यतः ।
तस्मान्महानसे वैद्यः प्रमादरहितो भवेत् ॥
इति विष-वैद्यगुणकर्त्तव्यविज्ञानीयो नाम त्रयोदशोऽध्यायः ।

---

## अथ स्थावर-विषप्रतिषेधो नाम चतुर्द्दशोऽध्यायः ।

सुकरत्वादमोघत्वाच्चादौ मन्त्रमूलकं चिकित्सितमाह—

विषं तेजोमयै र्मन्त्रैः सत्यब्रह्मतपोधनैः ।
यथा निवार्य्यते शीघ्रं प्रयुक्तै र्न तथौषधैः ।
नतु सर्वमनुष्याणां सन्ति भेषजसम्पदः ।
अज्ञातरोगसद्भावे योग्यता चातिदुर्लभा ।
प्रकुप्यति विषं भूयः केवलैश्चौषधैर्जितम् ।

मन्त्रचिकित्सायां दुर्व्वटत्वे अगद-प्रयोजनमाह—

अवाप्तौ सिद्धमन्त्राणां यतेतातश्चिकित्सकः।
नापि ते व्रतहीनस्य हीना वा स्वरवर्णतः।
यस्मान्न सिद्धिमायान्ति तस्माद् योज्योऽगदक्रमः।

स्थावरविषाणां प्रथमादिवेगेन चिकित्सामाह—

प्रथमे विषवेगे तु वान्तं शीताम्बुसेचितम्। (क)
अगदं मधुसर्पिर्भ्यां पाययेत समायुतम्॥
द्वितीये पूर्व्ववद्वान्तं पाययेत् तु विरेचनम्।
तृतीयेऽगदपानन्तु हितं नस्यं तथाञ्जनम्॥
चतुर्थे स्नेहसंमिश्रं पाययेतागदं भिषक्।
पञ्चमे क्षौद्रमधुक-क्वाथयुक्तं प्रदापयेत्॥
षष्ठेऽतीसारवत् सिद्धिरवपीड़श्च सप्तमे।

---

(क) प्रथमे इत्यादि। वान्तं कृतवमनं वमनञ्चेह लवणाढ्येनोष्णोदकेन, मधु-युक्तेन ताम्रभस्मना, गौरसर्षपचूर्णसहितेनोष्णोदकेन तुल्ययुक्तेन शीतवारिणा वा कारयेत्। यदुक्तं प्रायोहि वमनेनैव सुखं निर्ह्रियते विषम्। ततः शीताम्बुना परिषिक्तः कार्य्यः। मधुना गव्यघृतेन च त्वगदं दूषीविषारिसंज्ञं पाययेत्। तृतीये इत्यादि। अगदमेव दूषी-विषारि मधुसर्पिर्युक्तं देयम्। महागदो नामागदं नस्याञ्जनयोगेन दातव्यम्। अपरञ्च चक्षुष्यं संज्ञाप्रबोधनं अञ्जनं, नस्यञ्च संज्ञाप्रबोधनं विषघ्नञ्च योज्यम्। चतुर्थे इति। अगदं दूषीविषारि। स्नेहसंमिश्रमिति विषघ्नेन गव्येन घृतेन युक्तम्। पञ्चमे इति। मधु-मधुक-क्वाथयुक्तं दूषीविषारिसंज्ञमगदं वक्ष्यमाणं दापयेत्। षष्ठ अतिसारवत् साधनम्। सप्तमे वेगे असाध्यकल्पे प्रत्याख्याय क्रियां कुर्य्यात्। मूर्ध्नि काकपदमिति। ललाटोपरि शिरपर्य्यन्तं क्षुरकं कृत्वा तत्र रक्तसहितं [illegible] मांसखण्डं स्थापयेद् विष-संक्रमणार्थम्।

मूर्द्ध्नि काकपदं कृत्वा सासृग्वा पिशितं चिपेत् ॥
वेगान्तरे त्वन्यतमे कृते कर्म्मणि शीतलाम् । (ज)
यवागूं सघृतचौद्रामिमां दद्याद्विचक्षणः ॥

विषातुरस्य यवागूनिर्म्माणार्थं क्वाथमाह—

कोषातक्योऽग्निकः पाठासूर्य्यवल्ल्यमृताभयाः ।
शिरीषः किणिही शेलु र्गिर्य्याह्वा रजनीद्वयम् ॥
पुनर्नवे हरेणुश्च त्रिकटु सारिवे बला ।
एषां यवागूर्निक्वाथे कृता हन्ति विषद्वयम् ॥

अजेयं नाम घृतमाह—

मधुकं तगरं कुष्ठं भद्रदारुहरेणवः । (झ)
पुन्नागैलैलवालूनि नागोपुष्पोत्पलं सिता ॥
विड़ङ्गं चन्दनं पत्रं प्रियङ्गुध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च सारिवे च स्थिरा सहा ॥
कल्कैरेषां घृतं सिद्धमजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्व्वाणि शीघ्रमेवाजितं क्वचित् ॥

---

(ज) प्रथमादि-सप्तविषवेगेष्वादौ यत् करणीयं तदभिधाय अनन्तरकरणीयमाह वेगान्तर इति। कोषातकी घोषकः घोषालतेति लोके। अग्निको वन्ययमानी, सूर्य्यवल्ली सूर्य्यावर्त्तः हुड़हुड़े इति लोके। किणिही अपामार्गः। शेलुः श्लेष्मातकः 'लसोड़ा' इति लोके। पुनर्नवे श्वेतरक्ते, हरेणुः पर्पटकः। सारिवे अनन्तमूलं श्यामालता च। कोषातक्यादीनां क्वाथसिद्धां यवागूं सघृतमाक्षिकां पाययेत् ।

(झ) तगरं अभावे शिहलीजटा, पुन्नागः सुरभिकुसुमः तैलफल उत्कलसुलभ उच्चैः वृक्षस्तस्यमूलत्वक्। एलवालु वणिक्द्रव्यं, नागपुष्पं नागकेशरपुष्पं, ध्यामकं उशीरं, गन्धतृणंवा। बृहत्याविति क्षुद्रफला बृहत्फला च। स्थिरा शालपर्णी, सहा माषपर्णी ।

दूषीविषारिर्नामागदमाह—

पिप्पल्यो ध्यामकं मांसी रोध्रमेला सुवर्च्चिका।
कुटन्नटं नतं कुष्ठं यष्ठी चन्दन गैरिकं।
दूषीविषारिर्नामाऽयं नचान्यत्रापि वार्य्यते।

परीहारार्थं विषवर्द्धकान्याह—

क्षुत्तृष्णाधर्म्मदौर्वल्यक्रोधशोकभयश्रमैः।
अजीर्ण वर्च्चंद्रवता-पित्तमारुतवृद्धिभिः।
तिलपुष्पफलाघ्राणभूवाष्पघनगर्जितैः।
हस्तिमूषिकवादित्रनिःस्वनैर्विषसङ्कटैः।
पुरोवातोत्पलामोदमदनै वर्द्धते विषम्।

विषप्रकोपे ऋतुप्रभावमाह—

वर्षासु चाम्बुयोनित्वात् संक्लेदं गुड़वद्गतम्।
विसर्पति घनात्यये तदगस्त्यो हिनस्ति च।
प्रयाति मन्दवीर्य्यत्वं विषं तस्माद् घनात्यये।

कफादिभेदेन चिकित्सामाह—

श्लैष्मिकं वमनैरुष्णरुक्षतीक्ष्णैः प्रलेपनैः।
कषायकटुतिक्तैश्च भोजनैः शमयेद् विषम्।
पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः।
कषायतिक्तमधुरै घृतयुक्तैश्च भोजनैः।
वातात्मकं जयेत् स्वादु-स्निग्धाम्ल-लवणान्वितैः।
सघृतैर्भोजनैर्लेपैस्तथैव पिशिताशनैः।

घृतस्य विषहन्तृत्वमाह—

नाघृतं स्रंसनं शस्तं प्रलोपो भोज्य मौषधम्।
सर्वेषु सर्वावस्थेषु विषेषु न घृतोपमं।
विद्यते भेषजं किञ्चित् विशेषात् प्रबलेऽनिले।

श्लैष्मिकादि-भेदेन साध्यासाध्यत्वमाह—

अयत्नात् श्लैष्मिकं साध्यं यत्नात् पित्ताशयाश्रयं।
सुदुःसाध्यमसाध्यं वा वाताशयगतं विषम्।
रक्तजे स्रावयेद्रक्तं पित्तवच्च क्रियाक्रमः।

विषस्याशयभेदेन चिकित्सामाह—

आशये यस्य दोषस्य विषं तिष्ठति तं पुरः।
आश्रयाश्रयिणोर्विद्वानविरोधेन साधयेत्।
चौरागदैः कफस्थाने स्थिते स्वेदसिराव्यधैः।
पित्ते चौद्रपयोऽभ्यज्य पानसेकावगाहनम्।
स्वेदो वाताशये दध्ना पानञ्च नतकुष्ठयोः।
चीरेण गुड़गर्भेण मदनस्य फलेन च।
आस्थापनं प्रयुञ्जीत वाताशयगते विषे।

पीतस्य मूलविषस्य चिकित्सामाह—

दध्याज्यचौद्रलवणं पीतं मूलविषापहम्।

तेनैव दिग्धविद्धस्य विशेषचिकित्सामाह—

हरिद्रासैन्धवचौद्रघृतं संसृज्य पाययेत्।
आर्त्तान् मूलविषैर्वीरैर्दिग्धविद्धान् विशेषतः।

सर्व्वस्थावरविषे हितमाह—

हरिद्रान्तर्वहिः शस्ता विषदोषातुरे परम्।

धुस्तूरविषचिकित्सामाह—

तं वामयेन्मधुरैः पाययेद्वा सितापयः।

कोरदूषमदनविष-चिकित्सामाह—

तत्रापि वमनं हितम्।

कुष्माण्डकञ्च सगुड़ं बहुशस्तत्र भोजयेत्।

नानाप्रकारैः संयोगैः कोद्रवा मदहेतवः।

तान् विभज्य यथायोगं चिकित्सेदविरोधिभिः।

इति स्थावरविषप्रतिषेधो नाम चतुर्दशोऽध्यायः।

---

## सर्पविषप्रतिषेधो नाम पञ्चदशोऽध्यायः।

आदौ बन्धमाह—

सर्व्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः।

दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले॥

बन्धस्योपादानभूतं द्रव्यं तदुपकारित्वञ्चाह—

प्लोतचर्म्मान्तवल्कानां मृदुनान्यतमेन च। *

न गच्छति विषं देहमरिष्टाभिर्निवारितम्।

बन्धदार्ढ्योत्कर्त्तनादीनां शीघ्रानुष्ठेयतां सोपपत्तिकमाह—

मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः।

देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयेत्।

---

* प्लोतं वस्त्रं, चर्म्मान्तं कर्त्तितं सूत्राकृति चर्म्म, दृढ़कार्पाससूत्रेण चौमसूत्रेण केशनिर्म्मितरज्वा वा बन्धः कार्य्यः। अप्राप्ते तु उत्तरीयेन परिधृतवस्त्रप्रान्तेन उपवीतेन वा यथालाभं।

एतस्मिन्नन्तरे कर्म्म दंशस्योत्कर्त्तनादिकम् ।
कुर्य्याच्छीघ्रं तथा देहे विषवह्नी न रोहति ।

बन्धोयथा कर्त्तव्यस्तदाह—

बन्धो दंशानुसारेण नातिगाढ़श्लथो हितः ।

अतिगाढ़श्लथस्य दोषमाह—

दंशपूतित्व-शोफादीन् कुरुते ह्यतिपीड़ितः ।
अशक्तः शिथिलो रोद्धुं विषं देशान्तरं व्रजेत् ।

बन्धनस्य विषस्तम्भकारित्वं सोदाहरणमाह—

अम्बुवत् सेतुबन्धेन बन्धेन स्तभ्यते विषम् ।
न वहन्ति सिराश्चास्य विषं बन्धाभिपीड़िताः ।

बन्धमभिधाय उत्कर्त्तनपूर्व्वकं दाहमाह—

दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते ।

दाहप्रकारमाह—

प्रतप्तैर्हेमलोहाद्यैर्दहेद्दाशूलमुकेण वा ।
करोति भस्मसात् सद्यो वह्निः किन्नाम नु क्षतम् ।
आचूषणच्छेददाहाः सर्व्वत्रैव तु पूजिताः ॥

आचूषणमाह—

आचूषेत् पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ।
प्रच्छायान्तररिष्टाया मांसलं तु विशेषतः ।
स दष्टव्योऽथ वा सर्पो लोष्ट्रो वापि हि तत्क्षणम् ॥ †

---

† उक्तमन्यत्र—"दष्टमात्रं दशेदाशु तमेव पवनाशिनम् । लोष्ट्रं महीं वा दशनैश्छित्वाचानु ससम्भ्रमम् । निष्ठीवेन समालिम्पेत् । दंशं कर्णमलेन वा" । दंशनमात्रं

दष्टविशेषे दाहं निषेधयति—

अथ मण्डलिना दष्टं न कथञ्चन दाहयेत्।
स पित्तविषबाहुल्याद्दंशो दाहाद्विसर्पति।

मन्त्रशक्तिमाह—

देवब्रह्मर्षिभिः प्रोक्ताः मन्त्राः सत्यतपोमयाः।
भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम्॥
विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोधनैः।
यथा निवार्य्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः॥

मन्त्रग्रहणविधिमाह—

मन्त्राणां ग्रहणं कार्य्यं स्त्रीमांसमधुवर्ज्जिना।
जिताहारेण शुचिना कुशास्तरणशायिना॥
गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः
पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नतः॥

ग्रहणोच्चारणदोषात् हीनशक्तिकेभ्यो मन्त्रेभ्यो भेषजयोजनमेववरमिति दर्शयन्नाह—

मन्त्रास्त्वविधिना प्रोक्ता हीना वा स्वरवर्णतः।
यस्मान्न सिद्धिमायान्ति तस्माद् योज्योऽगदक्रमः॥

---

केचित् मृदुफलस्य दंशन मुपदिशन्ति। मृदुफलमिति सुकुमारद्रव्योपलक्षं तेन रम्भा-मृणालकाण्डाद्यपि बोध्यमिति केचित् तथाच वृन्दः—"धर्त्तुं दंशविधौ न भोगिनमसौ प्राप्नोति दष्टो यदा। रम्भाखण्डमृणालकोमलफलं दन्तैर्दशत्याशु यत्। गच्छेत्तत् क्षणमेव तस्य गरलं तद्दष्टवस्त्वन्तरं। दंशे नीरसतां नयेच्च बहुधा संबध्य हस्तेन वै"।

विसृते विषे रक्तनिर्हरणं स्तौति—

समन्ततः सिरा दंशाद्विध्येत् तु कुशलो भिषक् । (क)
शाखाग्रे वा ललाटे वा वेध्यास्ता विसृते विषे ।
रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम् ।
तस्माद्विस्रावयेद्रक्तं सा ह्यस्य परमा क्रिया ॥
दुष्टेतु व्याप्नुवत्स्वङ्गं ध्रुवं मृत्युर्भवत्युत ।
सिराव्यधोदितैरस्रं अप्रवृत्तं प्रवर्त्तयेत् ।
सिरास्वदृश्यमानासु योज्याः शृङ्गजलौकसः ।
शोणितं स्रुतशेषञ्च प्रविलीनं विषोष्मणा ।
लेपसेकैः सुबहुशः स्तम्भयेद् भृशशीतलैः ।

अतिप्रवृत्तस्य रक्तस्य स्तम्भनमुपदिशति—

स्तम्भयेदतिवृत्तन्तु तैरेव प्राणरक्षया ।

विषदुष्टस्य रक्तस्य परीक्षा माह—

दुर्गन्धं सविषं रक्तमग्नौ चटचटायते ।
यथादोषं विशुद्धञ्च पूर्ववल्लक्षयेदसृक् ।

अनन्तर करणीय माह—

समन्तादगदैर्दंशं प्रच्छयित्वा प्रलेपयेत् ।
चन्दनोशीरयुक्तेन वारिणा परिषेचयेत् ॥
पाययेतागदांस्तांस्तान् क्षीरक्षौद्रघृतादिभिः ।

---

(क) उक्तञ्च—"विषमाहैयमप्राप्य रक्तं दूषयते वपुः । रक्तमन्वपि तु प्राप्तं वर्द्धते तैलमम्बुवत्" । अतः प्रसृते विषे रक्त निर्हरणमाह समन्तत इति ।

तदलाभे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका ॥
कोविदारशिरीषार्ककटभीर्वापि भक्षयेत् ।

विषातुरस्य वर्ज्जनीयान्याह—

न पिवेत् तैलकौलत्थ-मद्यसौवीरकाणि च ॥

विषनिर्हरणं वमनं स्तौति—

द्रवमन्यत्तु यत् किञ्चित् पीत्वा पीत्वा तदुद्वमेत् ।
प्रायो हि वमनेनैव सुखं निर्ह्रियते विषम् ॥

दर्व्वीकरप्रथमादिवेगेषु क्रमाच्चिकित्साविशेषमाह—

फणिनां विषवेगे तु प्रथमे शोणितं हरेत् ।
द्वितीये मधुसर्पिर्भ्यां पाययेतागदं भिषक् ॥ (१)
नस्यकर्म्माञ्जने युञ्ज्यात् तृतीये विषनाशने ।
वान्तं चतुर्थे पूर्व्वोक्तां यवागूमथ दापयेत् ॥ (२)
शीतोपचारं कृत्वादौ भिषक् पञ्चमषष्ठयोः ।
दापयेच्छोधनं तीक्ष्णं यवागूञ्चापि कीर्त्तिताम् ॥
सप्तमे त्ववपीड़ेन शिरस्तीक्ष्णेन शोधयेत् ।
तीक्ष्णमेवाञ्जनं दद्यात् तीक्ष्णशस्त्रेण मूर्द्ध्नि च । (३)
कुर्य्यात् काकपदं चर्म्म सासृग्वा पिशितं क्षिपेत् ।

---

(१) वक्ष्यमानं महागदादिकं ।

(२) पूर्व्वोक्तामिति कोषातक्यादीनां क्वाथेन सिद्धां ।

(३) ललाटोपरि शिरःपर्य्यन्तं मुण्डनं कृत्वा क्षुरप्रहते तस्मिन् सद्यः कर्त्तितं रक्तसहितं छागादीनां मांसखण्डं स्थापयेत् विषसंक्रमणार्थम् ।

मण्डलिनां प्रथमादिवेगेषु चिकित्सामाह—

पूर्व्वे मण्डलिनां वेगे दर्व्वीकरवदाचरेत्
अगदं मधुसर्पिर्भ्यां द्वितीये पाययेत च ।
वामयित्वा यवागूञ्च पूर्व्वोक्तामथ दापयेत् ॥
तृतीये शोधितं तीक्ष्णैर्यवागूं पाययेद्धिताम् ।
चतुर्थे पञ्चमे वापि दर्व्वीकरवदाचरेत् ॥
काकोल्यादिर्हितः षष्ठे पयस्च मधुरो गणः ।
हितोऽवपीड़े त्वगदः सप्तमे विषनाशनः ॥

राजिमतां प्रथमादिवेगेषु चिकित्सामाह

अथ राजिमतां वेगे प्रथमे शोणितं हरेत् ।
अगदं मधुसर्पिर्भ्यां संयुक्तं पाययेत च ॥
वान्तं द्वितीये त्वगदं पाययेद्विषनाशनम् ।
तृतीयादिषु त्रिष्वेव विधिर्दर्व्वीकरो हितः ।
षष्ठेऽञ्जनं तीक्ष्णतममवपीड़श्च सप्तमे ॥

विषार्त्तानां गर्भिणीबालवृद्धानां चिकित्सावैशिष्टमाह—

गर्भिणीबालवृद्धानां शिराव्यधविवर्ज्जितम् ।
विषार्त्तानां यथोद्दिष्टं विधानं शस्यते मृदु ॥

विषार्त्तानामजादीनां चिकित्सायां मात्राविशेषमाह—

रक्तावसेकाञ्जनानि नरतुल्यान्यजाविके ।
गवाश्वयोश्च द्विगुणं त्रिगुणं महिषोष्ट्रयोः ॥
चतुर्गुणन्तु नागानां केवलं सर्व्वपक्षिणाम् ।
परिषेकान् प्रदेहांश्च सुशीतानवचारयेत् ॥

अञ्जनादीनां मात्रामाह—

माषकन्त्वञ्जनस्येष्टं द्विगुणं नस्यतो हितम्।
पाने चतुर्गुणं पथ्यं वमनेऽष्टगुणं पुनः॥

अनुक्तमुपसंग्रहार्थमाह—

देशप्रकृतिसात्म्यर्त्तुविषवेगबलाबलम्।
प्रधार्य्य निपुणो बुद्ध्या ततः कर्म्म समाचरेत्॥

वेगानुपूर्व्वं कर्म्मोपसंहरन्नाह—

वेगानुपूर्व्वमित्येतत् कर्म्मोक्तं विषनाशनम्।

संप्रति स्थावरजङ्गमविषयोः कर्म्मावस्थाविशेषेण चिकित्सामाह—

कर्म्मावस्थाविशेषेण विषयोरुभयोः शृणु॥ (१)
विवर्णे कठिने शूने सरुजेऽङ्गे विषार्द्दिते।
तूर्णं विस्रावणं कार्य्यमुक्तेन विधिना ततः॥
शूनाक्षिकूटं निद्रार्त्तं विवर्णाविललोचनम्।
विवर्णञ्चापि पश्यन्तमञ्जनैः समुपाचरेत्॥
शिरोरुग्गौरवालस्य-हनुस्तम्भगलग्रहे।
शिरो विरेचयेत् क्षिप्रं मन्यास्तम्भे च दारुणे॥
नष्टसंज्ञं विवृताक्षं भग्नग्रीवं विरेचनैः।
चूर्णैः प्रधमनैस्तीक्ष्णैर्विषार्त्तं समुपाचरेत्।
ताडयेच्च सिराः क्षिप्रं तस्य शाखाललाटजाः॥
तास्वप्रसिच्यमानासु मूर्द्ध्नि शस्त्रेण शस्त्रवित्।

---

(१) उभयोः स्थावरजङ्गमयोः। तूर्णं सत्वरं विस्रावणं रक्तमोक्षणं, विवृताक्षं व्यावर्त्तितनेत्रं। सरक्तं हि मांसादिकं शिरसि निक्षिप्तं विषसंक्रामकं भवति। निः

६

कुर्य्यात् काकपदाकारं व्रणमेवं स्रवन्ति ताः ॥
सरक्तं चर्म्म मांसं वा निक्षिपेच्चास्य मूर्द्धि च ।

वातविषातुरस्य चिकित्सामाह—

क्षुधार्त्तमनिलप्रायं तद्विषार्त्तं समाहितः । (१)
पाययेद्दधि तक्रं वा सर्पिः क्षौद्रं तथा रसम् ॥

पित्तविषातुरस्य चिकित्सामाह—

तृड्दाहघर्म्मसंमोहे पैत्तं पैत्ते विषातुरम् । (२)
शीतैः संवाहनस्नानप्रदेहैः समुपाचरेत् ॥

कफविषातुरस्य चिकित्सामाह—

शीते शीतप्रसेकार्त्तं श्लैष्मिकं कफकृद्विषम् । (३)
वामयेदमनैस्तीक्ष्णैस्तथा मूर्च्छागदान्वितम् ॥
कोष्ठदाहरुजाध्मानमूत्रसङ्गरुगन्वितम् ।
विरेचयेच्छकृद्वायुसङ्गपित्तातुरं नरम् ॥

विषस्य निःशेषं निर्हरणमुपदिशन् तदकरणे दोषमाह—

निःशेषं निर्हरेच्चैव विषं परमदुर्ज्जयम् ।
अल्पमप्यवशिष्टं हि भूयो वेगाय कल्पते ॥

---

(१) तद्विषार्त्तमिति वाताधिकविषवेदनार्त्तम् । रसं मांसरसं अत्र मांसरसादिपानं विषवेगप्राप्तौ सत्यां सुखेन वमनार्थम् । निः

(२) घर्म्म इत्युष्णकाले, सम्मोहे मूर्च्छायां, पैत्तं पित्तलं पैत्तिकविषं, संवाहनं सुखकरस्पर्शं । निः

(३) शीते शीतकाले श्लैष्मिकं पुरुषं । आमाशयगतस्य कफस्य वमन मुद्दिश्य पच्यमानपक्वाशयगतयोः पित्तवातयोः विरेचनशब्देन विरेकवस्तौ निर्द्दिशन्नाह कोष्ठेत्यादि । कोष्ठदाहादौ तु विरेचनशब्दो विरेचन एव वर्त्तते । निः

कुर्य्याद्वा सादयैवर्ण्यं ज्वरकासशिरोरुजः।
शोफशोषप्रतिश्याय-तिमिरारुचिपीनसान्॥
तेषु चापि यथादोषं प्रतिकर्म्म प्रयोजयेत्।
विषार्त्तोपद्रवांश्चापि यथास्वं समुपाचरेत्॥
अथारिष्टां विमोच्याशु प्रच्छयित्वाङ्कितं तथा। (१)
दिह्यात् तत्र विषं स्कन्नं भूयो वेगाय कल्पते॥
एवं क्रियाक्रमैर्मन्त्रैरोषधीभिश्च यत्नतः।
विषे हृतगुणे देहाद्

हृतविषस्य वातादिप्रकोप चिकित्सामाह—

यदा दोषः प्रकुप्यति॥
तदा पवनमुद्वृत्तं स्नेहाद्यैः समुपाचरेत्। (२)
तैलमत्स्यकुलत्थाम्लवर्ज्जैर्मारुतनाशनैः॥
पित्तज्वरहरैः पित्तं कषायैः स्नेहवस्तिभिः॥
कफमारग्वधाद्येन सक्षौद्रेण गणेन तु॥
श्लेष्मघ्नैरगदैश्चापि तिक्तै रूक्षैश्च भोजनैः॥

---

(१) अथानन्तरं प्रच्छयित्वा दिह्यादगदैरितिशेषः। अन्यथा तत्र विषं स्कन्नं स्थानीभूतं भूयोवेगाय कल्पते पुनर्वेगार्थं प्रादुर्भवतीत्यर्थः। औषधिभि र्महागदादि-निर्द्दिष्टाभिः। क्रियाक्रमै र्दूष्यसृतशोणितहरै र्वहिःपरिमार्ज्जनसेचनालेपनादिभिः। तथैवान्तः परिमार्ज्जनै र्वमनविरेचनास्थापन शिरोविरेचनाद्यै र्विषेहृतगुणे। निः

(२) उद्वृत्तं उच्चलितं परस्थानगतमितियावत्। स्नेहाद्यैरिति आदिशब्दात् मृदुसंशोधनस्वादुभोजनाङ्गविमर्द्दनादिभिः। श्लेष्मघ्नैरित्यादि समुपाचरेदित्यनुवर्त्तते।

वृक्षप्रपातविषमपतितं मृतमम्भसि । (१)
उद्वृत्तञ्च मृतं सद्यश्चिकित्सेन्नष्टसंज्ञवत् ॥

तीक्ष्णैर्लेपैर्वा बन्धस्य गाढ़त्वेन शूनेऽङ्गे गात्रे च क्लिन्ने तत्प्रतीकारमाह—

गाढ़ं बद्धेऽरिष्टया प्रच्छितेऽपि तीक्ष्णैर्लेपैस्तद्विधैर्वा विशेषैः ।
शूने गात्रे क्लिन्नमत्यर्थपूति ज्ञेयं मांसं तद्विषात् पूति कष्टम् ॥
तेषां युक्त्या पूतिमांसान्यपोह्य वार्य्यौकोभिः शोणितञ्चापहृत्य ।
हृत्वा दोषान् चित्रमूर्द्धन्त्वधश्च सम्यक् सिञ्चेत् चीरिणां त्वक्कषायैः
अन्तर्वस्त्रं दापयेच्च प्रदेहान् शीतैर्द्रव्यैराज्ययुक्तैर्विषघ्नैः ॥

महागदोनामागदमाह—

त्रिवृद्विशल्ये मधुकं हरिद्रे रक्ता नरेन्द्रो लवणश्च वर्गः । (२)
कटुत्रिकञ्चैव विचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि ॥
एषोऽगदो हन्ति विषं प्रयुक्तः पानाञ्जनाभ्यञ्जननस्ययोगैः ।
अवार्य्यवीर्य्यो विषवेगहन्ता महागदो नाम महाप्रभावः ॥

अजितोनामागदमाह—

विड़ङ्गपाठात्रिफलाजमोदाहिङ्गूनि चक्रं त्रिकटूनि चैव । (३)
सर्वश्च वर्गो लवणश्च सूक्ष्मः सचित्रकः क्षौद्रयुतो निधेयः ॥

---

(१) प्रपाती नदीतटादिः, विषमो निम्नोन्नतप्रदेशः, वृक्षादिपतितं मृतं प्राणिनं, मृतं अम्भसि, उद्वृत्तं उल्लसितञ्च मृतं सद्यो झटिति नष्टसंज्ञवत् चिकित्सेत् । निः .

(२) विशल्या लाङ्गलिका 'विषलाङ्गली' इति लोके । रक्ता गुञ्जा मञ्जिष्ठा वा । नरेन्द्र आरग्वधस्तस्य मूलत्वक् । लवणो वर्ग इति सैन्धवसामुद्र-विड़सौवर्चल-रोम-कोद्भिदानि लवणानि । शृङ्गे गवामिति ।

(३) पाठा आकनादि, अजमोदा वन्ययमानी, चक्रं रक्तकुलत्थः, सर्व्वोलवण-वर्ग इति सुश्रुतोक्तलवणवर्गकथितानि सर्व्वाणि लवणानि । सूक्ष्मः रीठा इति लोके ।

शृङ्गे गवां शृङ्गमयेन चैव प्रच्छादितः पक्षमुपेक्षितश्च ।
एषोऽगदः स्थावरजङ्गमानां जेता विषाणामजितो हि नाम्ना ॥

तार्क्ष्यं नामागदमाह—

प्रपौण्डरीकं सुरदारु मुस्ता कालानुसार्य्यं कटुरोहिणी च । (१)
स्थौणेयकं ध्यामकपद्मकानि पुन्नागतालीशसुवर्च्चिकाश्च ॥
कुटन्नटैलासितसिन्धुवाराः शैलेयकुष्ठे तगरं प्रियङ्गुः ।
रोध्रं जलं काञ्चनगैरिकञ्च समागधं चन्दनसैन्धवञ्च ॥
सूक्ष्माणि चूर्णानि समानि कृत्वा शृङ्गे निदध्यान्मधुसंयुतानि ।
एषोऽगदस्तार्क्ष्य इति प्रदिष्टो विषं निहन्यादपि तक्षकस्य ॥

ऋषभोनामागदमाह—

मांसी हरेणु-त्रिफला-सुरङ्गी-रक्तालता-यष्टिक-पद्मकानि । (२)
विड़ङ्ग-तालीश-सुगन्धिकैला-त्वक्-कुष्ठ-पत्राणि सचन्दनानि ॥

---

(१) प्रपौण्डरीकं कुष्ठाकृति वणिक्द्रव्यविशेषं आंखका लकड़ीतिलोके कालानुसार्य्यं पीतचन्दनम् । स्थौणेयकं गेंठेला इति लोके, असितसिन्दुवारः नीलपुष्पनिसिन्दा । शैलेयं शैलज इति लोके । जलं वाला, काञ्चनगैरिकं स्वर्णगैरिकं, मागधी पिप्पली, चन्दनं श्वेतचन्दनं ।

(२) मांसी जटामांसी, हरेणुः वृहच्चणकः, सुरङ्गी रक्तशोभाञ्जनस्तस्य मूलत्वग् ग्राह्या, रक्तालता मञ्जिष्ठा, पद्मकं पद्मकाष्ठं, सुगन्धिकः शिलारस इति लोके, त्वक् गुड़त्वक्, पत्रं तेजपत्रम्, किणिही अपामार्गः, मृगादनी इन्द्रवारुणी, कर्कटिका कांकुड़ इति लोके तस्या मूलं, पुरं गुग्गुलु । पालिन्दी श्यामालता, क्रमुकं पूगफलं तत्त्वचं ग्राह्यं, सुरसी श्वेतनिर्गुण्डी तस्या पुष्पं, श्वाहृत्करजं पुष्पं भल्लातकपुष्पं वराहादीनां नकुलान्तानां पित्तं ।

भार्गी पटोलं किणिही सपाठा मृगादनी कर्कटिका पुरञ्च ।
पालिन्द्यशोकौ क्रमुकं सुरस्याः प्रसूनमारुष्करजञ्च पुष्पम् ॥
चूर्णान्यथैषां निहितानि शृङ्गे न्यसेच्च पित्तानि समाक्षिकाणि ।
वराहगोधाशिखिशल्लकानां मार्ज्जारजं पार्षतनाकुले च ॥
यस्यागदोऽयं सुकृतो गृहे स्यान्नाम्नर्षभो नाम नरर्षभस्य ।
न तत्र सर्पाः कुत एव कीटाः त्यजन्ति वीर्य्याणि विषाणि चैव ॥
एतेन भेर्य्यः पटहाश्च दिग्धा नानद्यमाना विषमाशु हन्युः ।
दिग्धाः पताकाश्च निरीक्ष्य सद्यो विषाभिभूता ह्यविषा भवन्ति ॥

सञ्जीवननामागदमाह—

लाक्षाहरेणुर्नलदं प्रियङ्गुः शिग्रुद्वयं यष्टिकपृथ्वीकाश्च ।
चूर्णीकृतोऽयं रजनीविमिश्रो वर्गो विधेयो मधुसर्पिषाक्तः ॥
शृङ्गे गवां पूर्ववदापिधानस्ततः प्रयोज्योऽञ्जननस्यपानैः ।
सञ्जीवनो नाम गत सुकल्पमेषोऽगदो जीवयतीह मर्त्यम् ॥

दर्व्वीकरादिविषाणामगदमाह—

श्लेष्मातकः कट्फलमातुलुङ्गः श्वेता गिरिह्वा किणिही सिता च ।
सतण्डुलीयोऽगद एष मुख्यो विषेषु दर्व्वीकरराजिलानाम् ॥
द्राक्षा सुगन्धा नगवृत्तिका च पिष्टा समङ्गा समभागयुक्ता ।
देयो द्विभागः सुरसाच्छदस्य कपित्थविल्वादपि दाड़िमाच्च ॥
तथार्द्धभागोऽसितसिन्दुवारादङ्कोठमूलादपि गैरिकाच्च ।
एषोऽगदः क्षौद्रयुतो निहन्ति विशेषतो मण्डलिनां विषाणि ॥

दिग्धविद्धस्य चिकित्सामाह—

शल्यमाकृष्य तप्तेन लोहेनानुदहेद्व्रणम् ।

अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लितः।
शिरीषाद् ग्टध्रनख्याश्च क्षारेण प्रतिसारयेत्।
शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत्।
कीटदष्टचिकित्साञ्च कुर्य्यात्तत्र यथार्हतः।
व्रणे तु पूति पिशिते क्रिया पित्तविसर्पवत्।
उष्णवर्ज्जो विधिः कार्य्यो विषार्त्तानां विजानता।
मुक्ता कीटविषं तद्धि शीतेनाभिप्रवर्द्धते।
अन्नपानविधावुक्तमुपधार्य्य शुभाशुभम्।
शुभं देयं विषार्त्तेभ्यो विरुद्धेभ्यश्च वारयेत्।
फाणितं शिग्रु सौवीरमजीर्णाध्यशनं तथा।
वर्ज्जयेच्च समासेन नवधान्यादिकं गणम्।
दिवास्वप्नं व्यवायञ्च व्यायामं क्रोधमातपम्।
सुरातिलकुलत्थांश्च वर्ज्जयेद्धि विषातुरः।

सर्पविवासनं धार्य्यमाह—

छत्री झर्झरपाणिश्च चरेद्रात्रौ तथा दिवा।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्त्याशु पन्नगाः

विषहर मण्यादिकमाह—

वज्रं मरकतं सारं पिचुकोविषमुष्टिका
कर्कोटकमणिः सर्पादवैदूर्य्यगजमौक्तिकम्।
धार्य्यं गरमणिर्याश्च वरौषध्यः विषापहाः

इति सर्पविषप्रतिषेधो नाम पञ्चदशोऽध्यायः।

# मूषिकालर्कादिविषप्रतिषेधोनाम षोड़शोऽध्यायः ।

लालनविषस्य चिकित्सामाह—

तण्डुलीयककल्कन्तु लिह्यात् तत्र समाक्षिकम् ।

पुत्रकविषस्य चिकित्सामाह—

शिरीषेङ्गुदकल्कन्तु लिह्यात् तत्र समाक्षिकम् ।

कृष्णविषस्य चिकित्सामाह—

शिरीषफलकुष्ठन्तु पिबेत् किंशुकभस्मना ।

हंसिरविषस्य चिकित्सामाह—

पिबेदारग्वधादिन्तु सुवान्तस्तत्र मानवः ।

चिक्किरविषस्य चिकित्सामाह—

जालिनीमदनाङ्कोटकषायैर्वामयेत्तु तम् ।

कुकुन्दरविषस्य चिकित्सामाह—

यवनालर्षभक्षारं बृहत्याश्चात्र दापयेत् ।

अलसविषस्य चिकित्सामाह—

महागदं ससर्पिष्कं लिह्यात् तत्र समाक्षिकम् ।

कषायदन्तविषस्य चिकित्सामाह—

क्षौद्रोपेताः शिरीषस्य लिह्यात् सारफलत्वचः ।

कुलिङ्गविषस्य चिकित्सामाह—

सह्रे ससिन्धुवारे च लिह्यात् तत्र समाक्षिके ।

अजितविषस्य चिकित्सामाह—

तत्र क्षुद्रोक्षीरपिष्टां पालिन्दीं मधुना लिहेत्।

चपलविषस्य चिकित्सामाह—

सभद्रकाष्ठां सजटां क्षौद्रेण त्रिफलां लिहेत्।

कपिलविषस्य चिकित्सामाह—

क्षौद्रेण लिह्यात् त्रिफलां श्वेताञ्चापि पुनर्नवाम्।

कोकिलविषस्य चिकित्सामाह—

वर्षाभूनीलिनीक्वाथसिद्धं तत्र घृतं पिवेत्।

अरुणादीनां पञ्चानां चिकित्सामाह—

दधिक्षीरघृतप्रस्थास्त्रयः प्रत्येकशो मताः।
करञ्जारग्वधव्योष-बृहत्यंशुमतीस्थिराः।
निःक्वाथ्य चैषां क्वाथस्य चतुर्थांशः पुनर्भवेत्।
त्रिवृत्तिलामृताचक्र-सर्पगन्धा समृत्तिका।
कपित्थदाड़िमत्वक् च सुपिष्टानि तु दापयेत्।
तत् सर्व्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत्।
पञ्चानामरुणादीनां विषमेतद्व्यपोहति।

सामान्यतः मूषिकविषचिकित्सामाह—

काकादनीकाकमाची-स्वरसेष्वथवा कृतम्। (१)
सिराश्च स्रावयेत् प्राज्ञः कुर्य्यात् संशोधनानि च।

(१) अयंविधिः सिराव्यधादिकः कर्त्तव्यः। दग्ध्वा अग्नितप्तेन घृतेनेतिशेषः। विस्रावयेत् प्रच्छन्नेन प्रच्छितं दंशं शिरीषादिभिः कल्कैः रालिपयेत्।

सर्व्वेषाञ्च विधिः कार्य्यो मूषिकाणां विषेष्वयम् ।
दग्ध्वा विस्रावयेद्दंशं प्रच्छितञ्च प्रलेपयेत् ।
शिरीषरजनीकुष्ठ-कुङ्कुमैरमृतायुतैः ।
छर्द्दनं जालिनीक्वाथैः शुकाख्याङ्कोठयोरपि ॥ (१)
शुकाख्याकोषवत्योश्च मूलं मदन एव च ।
देवदालीफलञ्चैव दध्ना पीत्वा विषं वमेत् ॥
फलं वचा देवदाली कुष्ठं गोमूत्रपेषितम् ।
पूर्व्वकल्पेन योज्याः स्युः सर्व्वोन्दूरविषच्छिदः ॥
विरेचने त्रिवृद्दन्ती त्रिफलाकल्क इष्यते ।
शिरोविरेचने सारः शिरीषफलमेव च ॥ (२)
कटुत्रिकाद्यश्च हितो गोमयस्वरसोऽञ्जने ।
कपित्थगोमयरसः भक्षौद्रो लेह इष्यते ।
रसाञ्जनहरिद्रेन्द्रयवकटीषु वा कृतम् । (३)
कल्कं सातिविषं प्रातर्लिह्याच्च क्षौद्रसंयुतम् ।

---

(१) शुकाख्यः चर्म्मकार वट इति संप्रति अज्ञात एव। कोषवती घोषालता इति लोके। मूलमित्यव फलमित्यन्ये। पूर्व्वकल्पेन दध्ना लेह्यमित्यर्थः।

(२) सारःशिरीषस्य। कटुत्रिकाद्यश्चेति योगान्तरं। कटुत्रिकाद्यः त्रिकटु-कोत्कटः इत्यर्थः। संशमनयोगानाह कपित्थेत्यादि। प्रत्येकं कपित्थरसः गोमय-रसः समधुर्लेहः।

(३) कट्वी कटुरोहिणी। कपित्थफलमूलपुष्पत्वक्पत्रानां कल्कक्वाथाभ्यां सिद्धं पञ्चकापित्थं घृतम् सर्व्वमूषिकविषहरम्। प्रशान्तवेगस्यापि अवश्यं वमनादिशोधनं करणीयमिति दर्शयन्नाह मूषिकानामिति। अभ्रेषु मेघाच्छन्नदिनेषु। यश्चेति एतेन दूषीविषतुल्यता मूषिकविषस्योक्ता। निः

तण्डुलीयकमूलेषु सर्पिः सिद्धं पिबेन्नरः।
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा।
मूषिकानां विषं प्रायः कुप्यत्यभ्रेषु निर्हृतम्।
तत्राप्येषः विधिः कार्य्यो यश्च दूषीविषापहः।

आखुविषव्रणे कर्णिका भवन्ति तच्चिकित्सामाह—

स्थिरानां रुजतां वापि व्रणानां कर्णिकां भिषक्। (१)
पाटयित्वा यथादोषम् व्रणवच्चापि शोधयेत्।

शृगालालर्कादिविषचिकित्सामाह—

विस्राव्य दंशं तैर्दष्टे सर्पिषा परिदाहितम्। (२)
प्रदिह्यादगदैः सर्पिः पुराणं वापि पाययेत्।
अर्कक्षीरयुतञ्चास्य दद्याच्छोर्ध्वविरेचनम्।
श्वेतां पुनर्नवाञ्चास्य दद्याद्धुत्तूरकायुतम्।
पललं तिलतैलञ्च रूपिकायाः पयो गुड़ः। (३)

---

(१) स्थिरानामित्यादि स्थैर्य्येन कफात्मकता रुजतामित्यनेन वातात्मकता व्रणानामुक्ता। पाटयित्वा विदार्य्य। पाचयित्वेति केचित्।

(२) विस्राव्यदंशमित्यादि। विस्राव्य निष्पीड़नेन स्रावयित्वा वीजभूतस्य विषस्य नाशनार्थं, सर्पिषा दाहस्तु तच्छेषनाशनार्थः। अगदैर्महागदादिभिः। प्रदिह्यात् लिम्पेत्। विस्रावितशोणितस्य वातशमनार्थं वाह्यमौषधमुद्दिश्य आभ्यन्तरमुद्दिशन्नाह सर्पिःपुराणमिति। श्वेतामिति पुनर्नवाविशेषणं। धुत्तूरमूलान्वितां गयीतु धुत्तूराई-समायुतामिति पठति। धुत्तूरमूलस्यार्द्धेनयुतामिति व्याख्यानयति। अन्ये च धुत्तूरफलमित्याहुः।

(३) पललं तिलकल्कः, रूपिका अर्कः तस्य पयः क्षीरं, गुड़ इक्षुगुड़ः।

निहन्ति विषमालर्कं मेघवृन्दमिवानिलः ।
मूलस्य शरपुङ्खायाः कर्षं धुस्तूरकार्द्धिकम् ।
तण्डुलोदकमादाय पेषयेत् तण्डुलैः सह ।
उन्मत्तकस्य पत्रैस्तु संवेष्ट्यापूपकं पचेत् ।
खादेदौषधकाले तदलर्कविषदूषितः ।
करोत्यन्यान् विकारांस्तु तस्मिन् जीर्य्यति चौषधे । (१)
विकाराः शिशिरे याप्या गृहे वारिविवर्ज्जिते ।
ततः शान्तविकारस्तु स्नात्वा चैवापरेऽहनि । (२)
शालिषष्टिकयोर्भक्तं चीरेणोष्णेण भोजयेत् ।
दिनत्रये पञ्चमे वा विधिरेषोऽर्द्धमात्रया । (३)
कर्त्तव्यो भिषजावश्यमलर्कविषनाशनः ।
कुप्येत् स्वयं विषं यस्य न स जीवति मानवः ।
तस्मात् प्रकोपयेदाशु स्वयं यावन्न कुप्यति ।

---

धुस्तूरकार्द्धिकम् धुस्तूरजटायाः कर्षार्द्धं देयम्। उन्मत्तकपत्रै धुस्तूरपत्रैः। अलर्कः उन्मत्तकुक्कुरः ।

(१) तस्य भक्षितस्य परिणतिकाले यांश्च विकारानातुरः करोति तेषु प्रतीकारमाह—विकारा इत्यादि। विकारा उन्मत्तश्वादिदष्टोत्पन्नाः ; शिशिरे शीतले वारिविवर्ज्जितगृहे याप्याः शमनीयाः ।

(२) तत इत्यादि। उष्णेन चीरेण अन्नं भोजयेत्। गव्येन घृतेन वा भोजयेदिति गयदासाचार्य्यः। एष विधिः श्वेतां पुनर्नवामित्यादिकः अर्द्धमात्रया प्रागुक्तमात्रातः ।

(३) दिनत्रये पञ्चमे वा. कस्मादेष विधिःकार्य्य ? इत्याह—कुप्येत् स्वयं विषमिति ।

वीजरत्नौषधीगर्भैः कुम्भैः शीताम्बुपूरितैः । (१)
स्नापयेत् तं नदीतीरे समन्त्रैर्वा चतुष्पथे ।
दद्यात् संशोधनं तीक्ष्णमेवं स्नातस्य देहिनः ।
अशुद्धस्य सुरूढ़ेऽपि व्रणे कुप्यति तद्विषम् ।
नखदन्तक्षतं व्यालैर्यत् कृतं तद्विमर्द्दयेत् ।
सिञ्चेत् तैलेन कोष्णेन ते हि वातप्रकोपजाः ।

इति मूषिकालर्कादिविषप्रतिषेधो नाम षोड़शोऽध्यायः ।

---

## कीटवृश्चिकलूताविषप्रतिषेधोनाम सप्तदशोऽध्यायः ।

उग्रविषकीटानां चिकित्सामाह—

कीटैर्दंष्टानुग्रविषैः सर्पवत् समुपाचरेत् । (२)
त्रिविधानान्तु सर्पाणां त्रैविध्येन क्रिया हिता ।

सामान्यं चिकित्सितमाह—

स्वेदमालेपनं सेकञ्चोष्णमत्रावचारयेत् ।

---

(१) इदानीमलर्कविषे भूतानुबन्धोभवतीति तच्चिकित्सार्थं सविधिवैदिकं मन्त्रमुद्दिशन्नाह वीजरत्नौषधीत्यादि ।

(२) सर्पवदिति सर्पदष्टइव सर्पदष्टस्य सर्पवेगोक्ताभिः क्रियाभिरित्यर्थः । त्रिविधानामिति दर्व्वीकरमण्डलीराजिलगुक्रादियोनिभेदात् त्रिप्रकाराणां । पूर्व्वेषामाद्युक्तानां । त्रैविध्येन इति वान्तादिभेदेनेत्यर्थः ।

अन्यत्र मूर्च्छिताद्दंशात् पाककोथप्रपीड़िनात् । (१)
विषघ्नञ्च विधिं सर्व्वं कुर्य्यात् संशोधनानि च ।
शिरीषकटुकं कुष्ठं वचारजनिसैन्धवैः । (२)
क्षीरमज्जावसासर्पिः-शुण्ठीपिप्पलीदारुषु ।
उत्कारिका स्थिरादौ वा सुकृता स्वेदने हिता ।

वृश्चिकविषचिकित्सामाह—

न स्वेदयेत्तथा दंशं धूमं वक्ष्यामि वृश्चिके । (३)
अगदानेकजातीषु प्रवक्ष्यामि पृथक् पृथक् । (४)

---

(१) अन्यत्रमूर्च्छितादिति। मूर्च्छितं वर्ज्जयित्वा। मूर्च्छिते न कुर्य्यादित्यर्थः। विषघ्नञ्च विधिं सर्व्वं इत्यादि। संशमनविधिं पानस्याभ्यङ्गालेपनपरिषेकाञ्जनादिकं वातादिविषहरद्रव्यकल्पितं। संशोधनानि चेति। वमनविरेकास्थापनानि यथादोषमित्यध्याहारः।

(२) इदानीं वातादिदोषे विषहरस्वेदद्रव्यसूत्रमुद्दिशन्नाह शिरीषकटुकमित्यादि। उत्कारिका लप्सिका, स्थिरादौ शालपर्ण्यादौ। सुकृता शोभनकृता, एतेन क्षीरादिद्रव्यानां स्वल्पपेषितानां मात्राक्रमेण अतिद्रवो नाल्पद्रवः पाकः इति बुध्यते।

(३) मुक्ता कीटविषमित्यनेन हेतुना सर्व्वेष्वेव स्वेदं प्रसक्तं क्वचिन्निरस्यन्नाह न स्वेदयेदिति। वृश्चिकविषे दंशं न स्वेदयेत्, आदौ व्यवस्थितस्यापि क्रियापदेन सम्बन्धात्। तत्रापि किञ्चिदुष्मस्वेदमाह धूममिति। धूमश्च शिखिकुक्कुटवर्हाणीत्यादिना अग्रे वक्ष्यति।

(४) मन्दविषवृश्चिकलूतावर्ज्जं चतुःपञ्चाशतामेकजातीनां कीटानां चिकित्सितं निर्द्दिशन्नाह—अगदानेकजातीषु इत्यादि। चक्रं तगरमभावे शिहलीजटा। विकण्टविष इति विकण्टकग्रहणमपरस्वजातीयानां कणिभप्रभृतीनां प्राधान्यादुपलक्षणं। हिता अगदा इति शेषः।

विकण्टकादि-विषचिकित्सामाह—

कुष्ठं चक्रं वचा बिल्वमूलं पाठा सुवर्च्चिका।
गृहधूमं हरिद्रे द्वे त्रिकण्टकविषे हिताः।

गलगोलिकादि-विषचिकित्सामाह—

आगारधूमरजनीचक्रं कुष्ठं पलाशजम्। (१)
गलगोलिकदष्टानामगदो विषनाशनः।

शतपदविषचिकित्सामाह—

कुङ्कुमं तगरं शिग्रु पद्मकं रजनीद्वयम्।
अगदो जलपिष्टोऽयं शतपद्विषनाशनः।

सर्व्वमण्डूकदष्टचिकित्सामाह—

मेषशृङ्गी वचा पाठा निचुलो रोहिणी जलम्। (२)
सर्व्वमण्डुकदष्टानामगदो विषनाशनः।

विश्वम्भरादिदष्टचिकित्सामाह—

वचाश्वगन्धातिबला-बलासातिगुहागुहाः।
विश्वम्भराभिदष्टानामगदो विषनाशनः।

अहिण्डुकादिदष्टचिकित्सामाह—

शिरीषं तगरं कुष्ठं हरिद्रेऽंशुमती सहे।
अहिण्डुकाभिदष्टानामगदो विषनाशनः।

---

(१) प्रतिसूर्य्यकादिचिकित्साया वक्ष्यमाणत्वात् गलगोलिका चिकित्सितमाह— आगारधूम इत्यादि। पलाशजं बीजमितिशेषः।

(२) निचुलोवेतसः, जलं बालकं। अतिबला कङ्कतिका, अतिगुहा शालपर्णी, अगुहा पृश्निपर्णी।

कण्डूमकविषचिकित्सामाह—

कण्डूमकाभिदंष्टानां रात्रौ शीता: क्रिया हिता: ।
दिवा ते नैव सिध्यन्ति सूर्य्यरश्मिवलार्द्दिता: ।
चक्रं कुष्ठमपामार्ग: शुकवृन्तविषेऽगद: ।

पिपीलिकामचिकामशकविषचिकित्सामाह—

भृङ्गस्वरसपिष्ठा वा कृष्णावल्मीकमृत्तिका ।
पिपीलिकाभिर्दष्टानां मच्चिकामशकैस्तथा ।
गोमूत्रेण युतो लेप: कृष्णावल्मीकमृत्तिका ।

प्रतिसूर्य्यकदष्टचिकित्सामाह—

प्रतिसूर्य्यकदष्टानां सर्पदष्टवदाचरेत् ।

उग्रमध्यविषाणां कीटानां चिकित्सामाह—

उग्रमध्यविषैर्दष्टं चिकित्सेत् सर्पदष्टवत् ।
आदंशं स्वेदितं चूर्णै: प्रच्छितं प्रतिसारयेत् । (१)
रजनीसैन्धवव्योष-शिरीषफलपुष्पजै: ।
मातुलुङ्गाम्लगोमूत्र-पिष्टञ्च सुरसाग्रजम् ।
लेपे स्वेदे सुखोष्णञ्च गोमयं हितमिष्यते ।
पाने चौद्रयुतं सर्पि: चीरं वा बहुशर्करम् ।
गुड़ोदकं वा सुहिमं चातुर्ज्जातकवासितम् ।
पानमस्मै प्रदातव्यं चीरं वा सगुड़ं हिमम् ।
दंशं मन्दविषाणान्तु चक्रतैलेन सेचयेत् ।

---

(१) प्रतिसारणं घर्षणं तच्च दुष्टरक्तप्रवर्त्तनार्थं सुरसाग्रजं, तुलसीमञ्जरी ।

वृश्चिकविषचिकित्सामाह—

विदार्य्यादिसुसिद्धेन सुखोष्णेनाथवा पुनः । (१)
कुर्य्याच्चोत्कारिकास्वेदं विषघ्नै रुपनाहनैः
शिखिकुक्कुटवर्हाणि सैन्धवं तैलसर्पिषी ।
धूपो हन्ति प्रयुक्तोऽयं शीघ्रं वृश्चिकजं विषम् ।
कुसुम्भपुष्पं रजनी निशा वा कोद्रवं तृणम् ।
एभिर्घृताक्तैर्धूपस्तु पायुदेशे प्रयोजितः ।
नाशयेदाशु कीटोत्थं वृश्चिकस्य च यद्विषम् ।

लूताविषाणां दुर्विज्ञेयत्वमाह—

लूता विषं घोरतमं दुर्व्विज्ञेयतमन्तु तत् । (२)
दुश्चिकित्स्यतमं वापि भिषग्भिर्मन्दबुद्धिभिः ।

विषनिश्चयस्यावश्यकतां सोपपत्तिकमाह—

सविषं निर्व्विषञ्चैतदित्येवं परिशङ्किते ।
विषघ्नमेव कर्त्तव्यमविरोधि यदौषधम् ।
अगदानां हि संयोगो विषजुष्टस्य युज्यते ।
निर्व्विषे मानवे युक्तोऽगदः सम्पद्यतेऽसुखम् ।
तस्मात् सर्व्वैः प्रयत्नेन ज्ञातव्यो विषनिश्चयः ।
अज्ञात्वा विषसद्भावं भिषग्व्यापादयेन्नरम् ।

---

(१) उत्कारिकात् शिरीषादिविषहरद्रव्यैः पूर्व्वोक्ता पूर्व्वकल्पिता च । उपनाहयेत् विषघ्नद्रव्यै रुपनाहस्वेदं कुर्य्यात ।

(२) घोरतमं कष्टसाध्यं, दुर्व्विज्ञेयतमं अन्ते दुःखेन ज्ञातुं शक्यम् । तस्य दुर्व्विज्ञेयत्वादेव संशये सति विषहरमेव करणीयमित्यर्थः ।

प्रविकीर्णमात्रस्य लुताविषस्य दुर्विज्ञेयतां वृक्षौपम्येन दर्शयति—

प्रोद्भिद्यमानस्तु यथाङ्कुरेण न व्यक्तजातिः प्रविभाति वृक्षः ।
तद्दुरालक्ष्यतमं हि तासां विषं शरीरे प्रविकीर्णमात्रम् ।

प्रथमादिषु षष्ठेषु दिवसेषु यत् करोति तदाह—

ईषच्च कण्डुप्रचलं सकोठमव्यक्तवर्णं प्रथमेऽह्नि स्यात् ।
अन्तेषु शूनं परिनिम्नमध्यं प्रव्यक्तरूपञ्च दिने द्वितीये ।
त्र्यहेण तद्दर्शयतीह दंशं विषं चतुर्थेऽहनि कोपमेति ।
अतोऽधिकेऽह्नि प्रकरोति जन्तोर्विषप्रकोपप्रभवान् विकारान् ।
षष्ठे दिने विप्रसृतञ्च सर्व्वान् मर्म्मप्रदेशान् भृशमावृणोति ।
तं सप्तमेऽत्यर्थपरीतगात्रं व्यापादयेन्मर्त्त्यमतिप्रवृद्धम् ।

त्रिमण्डलाविषचिकित्सामाह—

तत्रार्कमूलं रजनी नाकुली पृश्निपर्णिका ।
नस्तकर्म्मणि शस्यन्ते पानाभ्यङ्गाञ्जनेषु च ।

श्वेतायाविषचिकित्सामाह—

तत्र चन्दनरास्नैला-हरेणुनलवञ्जुलाः ।
कुष्ठं लामज्जकं चक्रं नलदश्चागदो हितः ।

कपिलाविषचिकित्सामाह—

तत्र पद्मककुष्ठैला करञ्जककुभत्वचः ।
स्थिरार्कपर्ण्यपामार्ग-दूर्व्वाब्राह्मीविषापहाः

पीतिकाविषचिकित्सामाह—

तत्रेष्टाः कुटजोशीर-तुङ्गपद्मकवञ्जुलाः ।
शिरीषकिणिहीशेलु-कादम्बककुभत्वचः ।

आलविषचिकित्सामाह—

तत्र प्रियङ्गुह्रीवेरं कुष्ठं लामज्जवञ्जुलाः ।

अगदः शतपुष्पा च सपिप्पलवटाङ्कुराः ।

सूत्रविषायाश्चिकित्सामाह—

मनःशिलालमधुककुष्ठचन्दनपद्मकैः

मधुमिश्रैः सलामज्जैरगदस्तत्र कीर्त्तितः ।

रक्तायाश्चिकित्सामाह—

कार्य्यस्तत्रागदस्तोयचन्दनोशीरपद्मकैः

तथैवार्ज्जुनशेलुभ्यां त्वग्भिराम्रातकस्य च ।

कसनाविषचिकित्सामाह—

तत्रोक्तं रक्तलूताचिकित्सितम् ।

कृष्णाविषचिकित्सितमाह—

तत्रैलाचक्रसर्पाक्षीगन्धनाकुलीचन्दनैः

महासुगन्धिसहितैः प्रत्याख्यायागदः स्मृतः ।

अग्निवर्णाविषचिकित्सामाह—

कृष्णाप्रशमनञ्चात्र प्रत्याख्याय प्रयोजयेत् ।

सारिवोशीरयष्ट्याह्वचन्दनोत्पलपद्मकम् ।

सर्व्वासामेव युञ्जीत विषे श्लेष्मातकत्वचं । (२)

भिषक् सर्व्वप्रकारेषु तथा च क्षीरपिप्पलम् ।

असाध्यानां भिषक् प्राज्ञः प्रयुञ्जीत चिकित्सितम् ।

दोषोच्छ्रायविशेषेण च्छेदकर्म्मविवर्ज्जितम् ।

(२) तासामुक्तानां दशानामपि लूतानां विशिष्टं चिकित्सितमभिधाय सामान्यमाह—सर्व्वासामिति ।

साध्याभिरपि लूताभिर्दष्टमात्रस्य देहिनः।
वृद्धिपत्रेण मतिमान् सम्यगादंशमुद्धरेत्।
जम्बोष्ठेनाग्नितप्तेन दहेदाकरवारणात्।

याद‍ृशस्य दंशस्य च्छेदं कुर्य्यात् तदाह—

अमर्म्मणि विधानज्ञो वर्जितस्य ज्वरादिभिः।
दंशस्योत्कर्त्तनं कुर्य्यादल्पश्वयथुकस्य च।
मधुसैन्धवसंयुक्तैरगदैर्लेपयेत् ततः। (४)
प्रियङ्गुरजनीकुष्ठ-समङ्गामधुकैस्तथा।
सारिवामधुकं द्राक्षां पयस्यां क्षीरमोरटम्।
विदारीगोक्षुरक्षौद्रमधुकं पाययेत वा।
क्षीरिणां त्वक्कषायेन सुशीतेन च सेचयेत्।
उपद्रवान् यथादोषं विषघ्नैश्च प्रसाधयेत्।

लूतानान्तु दशविधमुपक्रममाह—

नस्याञ्जनाभ्यञ्जनपानधूमं तथावपीड़ं कवलग्रहञ्च।
संशोधनञ्चोभयत प्रयुञ्ज्याद्रक्तं हरेच्चापि जलायुकाभिः।
कीटदष्टव्रणान् सर्व्वानहिदष्टव्रणानपि।
आदाहपाकाद् यत्नेन दुष्टवत् समुपाचरेत्। (५)

(४) एकतयोगे मधुकद्वयं स्थलजलजभेदेन।

(५) दशविधानामपि लूतानां कीटत्वात् सामान्येनैव कीटविषोत्थव्रणानां तथा वाद‍ृशानामहिदष्टव्रणाना मदुष्टव्रणवच्चिकित्सामाह—कीटदष्टव्रणानिति। आदाहपाकादिति यावद्दाहपाकौ तिष्ठतः। विनिवृत्तयोश्च दाहपाकयो र्वक्ष्यमाणो विधिर्भविष्यति। दुष्टवत दुष्टव्रणवत् दुष्टव्रणोक्तञ्च "दुष्टव्रणेषु कर्त्तव्यमूर्द्धञ्च विषशोधनमित्यादि।"

विनिवृत्ते ततः शोफे कर्णिकापातनं हितम्।
निम्बपत्रं त्रिवृद्दन्तो कुसुम्भं रजनी मधु।
गुग्गुलुः सैन्धवं किण्वं वर्च्चः पारावतस्य च।
विषघ्नडिकरश्चान्नं हित्वा सम्भोजनं हितम्।
विषेभ्यः खलु सर्व्वेभ्यो कर्णिकामरुजां स्थिराम्।
प्रच्छयित्वा मधुयुतैः शोधनीयैरुपाचरेत्।
सप्तषष्ठस्य कीटानां शतस्यैतद्विभागशः।
दष्टलक्षणमाख्यातं चिकित्सा चाप्यनन्तरम्।
इति कीटवृश्चिकलूताविषप्रतिषेधोनाम सप्तदशोऽध्यायः।

---

## गरदूषीविषप्रतिषेधोनामाष्टादशोऽध्यायः।

गरार्त्तो वान्तिमान् भुक्ता पूर्व्वोक्तं पानभोजनम्।
शुद्धहृच्छिलयेद्धेम सूत्रस्थानविधिं स्मरन्।
शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयोः।
लेहः प्रशमत्युग्रं सर्व्वयोगकृतं विषम्।

---

तत्रशोधनं विषहरद्रव्यैस्तथालेपादिकमपि विषहरमेव। दुष्टव्रणचिकित्सितेन निवृत्तदाहादौ व्रणे या विषोत्पन्ना कर्णिका तस्याश्चिकित्सामाह—विनिवृत्ते इत्यादि। तस्याश्च कर्णिकायाः शोणितपित्तोत्थायाः सद्या रुजायाः प्रच्छन्नमन्तरेणैव पातनं सुकरं। नान्येव पातनद्रव्याण्याह निम्बपत्रमित्यादि। विषघ्नडिकरं तिलकुलत्थाद्यन्नं वर्जयित्वा स्वन्नं सम्भोजनं तत् कर्णिकापातने हितम्। कफवातोत्थितायाः कर्णिकायाश्चिकित्सामाह—विषेभ्य इत्यादि अरुजां अविद्यमानरुजां स्थिरां कठिनां शोधनीयैर्निशोत्रादन्त्यादिभिः दन्तीमूलमदनफलवल्कादिभिर्व्वा।

मूर्व्वामृतानतकणापटोलीचव्यचित्रकान्।
वचामुस्तविड़ङ्गानि तक्रकोष्णाम्बुमस्तुभिः
पिवेद्रसेन चाम्लेन गरोपहतपावकः।
पारावतामिषशटीपुष्कराह्वशृतं हिमम्।
गरतृष्णारुजाकासश्वासहिध्माज्वरापहम्।
वायसी श्वालकासघ्नी भृष्टाथ त्रिफलारसे।
भार्गीनागरनिर्यूहः शिशिरश्च समाक्षिकः।
हरेणुचन्दनश्यामानलदं श्लक्ष्णपेषितम्।
विलेपनं प्रयोक्तव्यं गरेणोपहतत्वचः।
मञ्जिष्ठाकिणिहीनिम्बरजन्यश्वत्यचन्दनैः
प्रघर्षणं शशानान्तु गरेण त्वपितौजसाम्।
पथ्यं परममुद्दिष्टं शीतलं क्षीरसर्पिषोः।
वृषनिम्बपटोलानां क्वाथेन विपचेद्घृतम्।
अभयागर्भिणं श्रेष्ठं तद्गरस्य निवर्हणम्।

मृत्युपाशच्छेदि घृतम्।

अभयां रोचनां कुष्ठमर्कपत्रं तथोत्पलम्।
नलवेतसमूलानि गरलं सुरसान्तथा।
सक्रलिङ्गां समञ्जिष्ठामनन्ताञ्च शतावरीम्।
शृङ्गाटकं समङ्गाञ्च पद्मकेशरमित्यपि।
वाल्कीकृत्य पचेत् सर्पिः पयोदद्याच्चतुर्गुणम्।
सम्यक् पक्वेऽवतीर्णे च शीते तस्मिन् विनिक्षिपेत्।
सर्पिस्तुल्यं भिषक् क्षौद्रं कलसञ्च निधापयेत्।

विषाणि हन्ति दुर्गाणि गरदोषकृतानि च।
स्वर्णोद्धन्ति विषं सर्व्वं गरेकृपहतत्वचाम्।
योगजं तमकं कण्डूं मांससादं विसंज्ञताम्।
नाशयत्यञ्जनाभ्यङ्गपानवस्तिषु योजितम्।
दूषीविषार्त्तं सुस्निग्धमूर्द्ध्वाधश्च शोधनम्।
पाययेदगदं सुख्यमिदं दूषीविषापहम्।
पिप्पल्योध्यामकं मांसी लोध्रमेलासुवर्चिका।
मरिचं बालकञ्चैला तथा कनकगैरिकं।
क्षौद्रयुक्त: कषायोऽयं दूषीविषमपोहति।

इति गरदूषीविषप्रतिषेधोनामाष्टादशोऽध्याय:।

---

## विषजुष्टजलानिलादिदोषप्रतिषेधो-नामोनविंशोऽध्याय:।

विषदुष्टस्य सरस: शोधनमाह—

धवाश्वकर्णासनपारिभद्रा: सपाटलासिद्धकमोचकौ च।
दग्धा: सराजद्रुमसोमवल्कास्तद्भस्मशीतं वितरेत् सर:सु।

ईप्सितस्याम्भस: शोधनमाह—

भस्माञ्जलिञ्चापि घटे निधाय विशोधयेदीप्सित मेवमम्भ:।

विषदूषितचिते: शोधनमाह—

तलान्यनन्तां सहसर्जगन्धै: पिष्टासुराभिर्विदिनियोज्यमार्गम्।
सिञ्चेत् पयोभिस्तु मृदन्वितैस्तां विडङ्गपाठाकटभीरैर्व्वा।

षट्दुष्टयोर्धूमानिलयोः शोधनमाह—

लाक्षाहरिद्रातिविषाभयाब्द ऽरेणुकैलादलवल्कुष्ठम्
प्रियङ्गुकाश्वाप्यनले निधाय धूमानिलोवापि विशोधयेत ।

दण्डकाष्ठगतविषप्रतिषेधमाह—

अथास्य धातकोपुष्पपथ्याजम्बूफलास्थिभिः
सक्षौद्रैः प्रच्छिते शोफे कर्त्तव्यं प्रतिसारणम् ।
अथवाङ्कोठमूलानि त्वचः सप्तच्छदस्य वा
शरीषमाषकावापि सक्षौद्राः प्रतिसारणम् ।

जिह्वानिर्लेखककवलगतविषप्रतिषेधमाह—

जिह्वानिर्लेखकवलौ दण्डकाष्ठवदादिशेत् ।

विषजुष्टस्याभ्यङ्गस्य प्रतीकारमाह—

तत्र शीताम्बुसिक्तस्य कर्त्तव्यमनुलेपनम् ।
चन्दनं तगरं कुष्ठमुशीरं वेणुपत्रिका
सोमवल्लयमृता श्वेतापद्मं कालीयकं त्वचम् ।
कपित्थरसमत्राभ्यां पानमेतच्च युज्यते ।

विषजुष्टानामुत्सादनादीनां चिकित्सामाह—

उत्सादने परीषेके कषाये चानुलेपने ।
शय्यावस्त्रतनुत्रेषु ज्ञेयमभ्यङ्गलक्षणैः ।

लेपनगतविष प्रतिषेधमाह—

प्रलेपो बहुशस्तत्र भाविताः कृष्णमृत्तिकाः
कृष्णपित्तघृतश्यामापालिन्दीतण्डुलीयकैः ।
गोमयस्वरसोवापि हितो वा मालतीरसः ।
रसो मूषिकपर्ण्यावा धूमोवागारसम्भवः ।

विषजुष्टानां शिरोऽभ्यङ्गादीनां चिकित्सामाह—

शिरोऽभ्यङ्गः शिरःस्त्राणं स्नानमुष्णीषमेव च
स्रजश्च विषसंसृष्टाः साधयेदनुलेपवत् ।

विषदूषितस्य मुखलेपस्य चिकित्सामाह—

तत्र क्षौद्रघृतं पानं प्रलेपश्चन्दनं घृतम् ।
पयस्या मधुकं फञ्जी बन्धुजीव पुनर्नवा ।

विषदूषितयोर्नस्यधूमयोश्चिकित्सामाह—

तत्र दुग्धैर्गवादीनां सर्पिः सातिविषैः शृतम् ।
पाने नस्ये च सश्वेतं हितं समदयन्तिकम् ।

विषदूषितस्य कर्णतैलस्य चिकित्सामाह—

तत्राशु कर्त्तव्यं प्रतिपूरणम् ।
स्वरसो बहुपुत्रायाः सघृतः क्षौद्रसंयुतः ।
सोमवल्करसश्चापि सुशीतो हित इष्यते ।

विषसंसृष्टस्याञ्जनस्य चिकित्सामाह—

तत्र सद्यो घृतं पेयं तर्पणञ्च समागधम् ।
अञ्जनं मेषशृङ्गस्य निर्य्यासो वरुणस्य च ।

इति विषजुष्टजलानलादिदोषप्रतिषेधोनामोनविंशोऽध्यायः ।

---

## विषोपद्रवप्रतिषेधोनामविंशोऽध्यायः ।

विषोपद्रवानाह—

ज्वरकासवमिश्वासहिक्काट्टणातिमूर्च्छनम् ।
व्रणदाहातिसाराश्च विशेषाद्वस्तिमूर्द्धरुक् ॥

श्वयथुः पूतिगन्धत्वं रक्तस्रावोऽग्निमन्दता ।
इति षोड़श निर्दिष्टा विषार्त्तानामुपद्रवाः ॥

उपेक्षितेषु फलमाह—

गच्छन्त्युपेक्षिता नाशं यैर्जुष्टा विषरोगिणः ।

उपद्रवानां चिकित्सामाह—

तत्र ज्वरस्य—

राजवृक्षफलोशीरकाश्मर्य्यवनपद्मकात् ।
क्वाथः सशर्करक्षौद्रो विषज्वरहरः परः ॥

कासस्य चिकित्सामाह—

द्राक्षाक्षं नगरं कृष्णामथवा सवराञ्जनम् ।
लीढ्वाज्यमधुना कासान्मुच्यते विषसम्भवात् ॥

वमनस्य चिकित्सामाह—

सपाठाञ्जनमञ्जिष्ठाद्विनिशामधुकं तथा ।
यष्ट्याह्वं चाम्भसा पीत्वा मरिचैरवचूर्णितं ।
विषवम्यां पिबेत् क्वाथं विल्वमूलाद्रसोऽथवा ।

श्वासस्य चिकित्सामाह—

श्वासी क्षौद्रेण वा द्राक्षाशृङ्गीमागधिका सिताः ।
गुड़नागरवैदेहीविजयामलकानि च ॥

हिक्कायाश्चिकित्सामाह—

सक्षौद्रं बालकरजः क्वाथं वा सगुड़ंपिबेत् ।

तृष्णायाश्चिकित्सामाह—

विषवेगसमुत्थायां तृष्णायां लाजतर्पणम् ।
शर्करादाड़िमक्षौद्रं सलिलप्लावितं पिबेत् ।

तृष्णामूर्च्छयोश्चिकित्सामाह—

तृष्णामूर्च्छयेऽङ्गशिरसोर्लिंपसेकादिमा हिताः ।
अम्भोजनालकुमुदचन्दनोशीरसौक्तिकैः ।
वैहायससितातोयक्षीराद्येक्षुरसाप्लुतैः ।
व्यजनं तालवृन्तेन शीते शिलातले स्थितिः ।

व्रणपूतिगन्धत्वयोश्चिकित्सामाह—

अल्पेनाप्यपचारेण दंशः पूतित्वमश्नुते
प्रायो न सहते तीक्ष्णमुष्णं वा भेषजं विषम् ।
मधुरस्निग्धशीतानि युञ्ज्यात् तस्माद् विषव्रणे ।
सेकालेपाश्च सक्षीरैः कषायैः क्षीरवृक्षजैः ।
न्यग्रोधशृङ्गमधुकतिलसर्षपसैन्धवम् ।
साभयानिम्बमध्वाज्यं दंशपूतित्वनाशनम् ।
कर्णिकापातनं श्रेष्ठं विषव्रणविशोधनम् ।

दाहस्य चिकित्सामाह—

कमलोत्पलकिञ्जल्कपाटलाम्बितवारिषु ।
विषतृड्दाहमूर्च्छाघ्नं सरसीष्ववगाहनम् ।

अतिसारस्य चिकित्सामाह—

रोध्रमोचरसाम्बष्ठाधातकीस्तण्डुलाम्बुना ।
समाक्षिकाः पिबेत् तद्वन्नागरातिविषाभयाः ।
सधातकीः सकुटजाः साञ्जनाः श्लक्ष्णचूर्णिताः ।

वस्तिमूर्द्धरुजोश्चिकित्सामाह—

सारग्वधां समधुकां सोपकुल्यां हरीतकीं ।
पिबेद्घृतेन सक्षौद्रां वस्तिशूलादिनाशिनीम् ।

शोथस्य चिकित्सामाह—

त्रिफलायाः कषायेन त्रिफला भाविता त्र्यहम् ।
आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी ।

रक्तस्रावस्य चिकित्माह—

रक्ते स्रवत्यतिभृशं घृतं समरिचं पिबेत् ।
तण्डुलीयकमूलेन सितया च समन्वितम् ।
दंशं प्रलेपयेच्चास्य दूर्वा सुश्लक्ष्णपिष्टया ।
सितोपलाक्षौद्रघृतच्छागदुग्धादि नादनम् ।
समीकल्कं पिबेच्छूर्णमङ्गं लिम्पेद्विशालया ।

ज्वरादियुक्तस्य अग्निमान्द्यस्य चिकित्सामाह—

बालविल्ववचामुस्तकषायः स पुनर्नवः ।
ज्वराग्निसादश्वयथून्निहन्ति विषसम्भवान् ।

विषे हितान्याह—

शालयः यष्टिका जीर्णाः कोरदूषा प्रियङ्गवः ।
मुद्गोहरेणुस्तुवरी पटोलं वेत्रपल्लवाः ।
तण्डुलीयकजीवन्ती वार्त्ताकं सुनिषण्णकः ।
जाङ्गलं दाड़िमं धात्री कपित्थं सैन्धवं सिता ।
अविदाहि यदप्यन्नविज्ञानीये स्वरूपतः
तत्तद्दद्याद्विषार्त्तेभ्यः कार्य्या व्यञ्जनसंस्कृतिः ।
कषाये विषहन्तॄणां घृतैः कल्याणकादिभिः ।
दिव्यसारसकूपाद्यमन्यद्वा शृतशीतलं ।
मध्वामलकयुक्तां वा विषार्त्तः सलिलं पिबेत् ।

नदीतड़ागजं त्याज्यं विशेषेण घनागमे ।
शुक्लवस्त्रोदरायाताः सुक्तताः सक्तवोयवाः ।
तक्रेण सघृता पीताः परमं विषनाशनाः ।
तिलमद्यकुलत्थचुत् टड़्भयायासमैथुनं ।
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ।

अविषस्य लक्षणम्—

प्रशान्तदोषप्रकृतिं सुधातुमाहारकामं सममूत्रविट्कम् ।
प्रसन्नचित्तेन्द्रियचेष्टितञ्च वैद्योऽवगच्छेदविषं मनुष्यम् ।

इति विषोपद्रवप्रतिषेधोनामो विंशोऽध्यायः ।

---

## विषोपयोगीयोनाम एकविंशोऽध्यायः ।

मन्त्रतन्त्रे विफलीभूते यदा यत् कार्य्यं तदाह—

विषे प्रतिविषं योज्यं मन्त्रतन्त्रैरसिध्यति ।
अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे ।
प्रभोर्निवेद्य प्रयतेन्नैव व्याखाय कस्यचित् ।
सिद्धमन्त्रधरः कृत्वा धरणीबन्धमादितः
नहि मन्त्रसाहाय्यस्य विषं यात्यविधेयताम् ।

सर्पदष्टे मूलविषस्य योजनीयतां सोपपत्तिकमाह—

श्लेष्मतुल्यगुणं प्रायः स्थिरमूर्द्धगमं विषम् ।
प्रायः पित्तगुणैर्युक्तं मध्यगामि च जङ्गमम् ।
गुणैरेभिर्विपर्यस्तैर्निहत स्तेपरस्परम् ।
युञ्ज्यान्मूलविषं तस्माद्दष्टानां पानलेपयोः ।

विषपीतस्य सर्पदंशनमुपदिशति—

विषपीतञ्च कुशलो दंशयेत् पवनाशिभिः ।
न विषप्रतिमं किञ्चिन्निर्विषीकरणं विषे ।

उपयोगार्हस्य मूलविषस्य मात्रामाह—

चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमां यवैः ।
मात्रां विषस्य मौलस्य प्रयुञ्जीत यथायथम् ।

यौगिकस्य मूलविषस्य मात्रामाह—

चतुर्भिः षड्भिरष्टाभि र्हीनमध्योत्तमां यवैः ।
मात्रां विषस्य मौलस्य प्रयुञ्जीत यथायथं ।
दष्टस्य द्वौ यवौ कीटैस्तिलमात्रं तु वृश्चिकैः ।
नैवलस्तकृत्ये पाने च लूतादष्टस्य नेष्यते ।

सविषनिर्विषत्वज्ञानाभावे अनिष्टोत्पत्तिं दर्शयति—

प्रच्छाय लेपयेद्दंशं तस्य ज्ञात्वा सुनिश्चितम् ।
सविषे युक्तमन्यत्र विषमे वा विषे विषम् ।
अबले चातिबलवद् व्यापन्नं चाप्रयोगतः ।
सविषाविषशङ्कायामगदानपि योजयेत् ।
अविरुद्धान् प्रयुक्तो हि निर्विषस्य गदोऽगदः ।
तद्वच्च सविषस्यापि क्रियाकालातिपाततः ।
जानीयात् विषसद्भावं भिषक् तस्मात् प्रयत्नतः ।

मूलविषेषु यानि यौगिकानि तान्याह—

शातुकं मुस्तकं शृङ्गी वालकं सर्षपाह्वयम् ।
वत्सनाभं च कर्माणं विषं स्निग्धं घनं गुरु ।
न जात्वन्यं प्रयोक्तव्यं कालकूटं विशेषतः ।

विषातुरे मूलविषयोजनानन्तरं यत् करणीयं तदाह—

विषेऽवचारिते तीक्ष्णे पेयं घृतमनन्तरम्।
सभार्गीदधिमण्डोत्थसारिवातण्डुलीयकम्।
लिह्यादवा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचं।
कुष्ठञ्च पानलेपाभ्यां समं सविषनाशनम्।
दाहे विषोद्भवे लेपः शक्तुक्षीरघृतैर्हितः।

सर्पदष्टस्य सर्पविषयोजनमाह—

यस्तु संरोषितो भोगी धूमं वक्त्राद् विमुञ्चति।
दण्डाग्रे पिशितं बद्धा बहुशस्तेन दंशयेत्।
अशक्तमगदैरन्यै विषपीतं चिकित्सकः।
पाययेन्मांसचूर्णं तं ज्ञात्वा विषबलाबलम्।
अन्येष्वपि च वेगेषु शेषोपायपरिक्षये।
विषं युञ्जीत नित्यं च रसायनगवेषिणः।

योजनयोग्यं कालंपात्रञ्चाह—

घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः।
सात्विकस्योदिते भानौ योज्य शीतवसन्तयोः।
ग्रीष्मे चात्ययिके व्याधौ न च वर्षासु दुर्दिने।
न क्रोधने न पित्तार्त्ते न क्लीबे राजनि द्विजे।
क्षुत्तृष्णाश्रमघर्म्माध्वव्याध्यनलरुजिपीड़िते।
गर्भिणीबालवृद्धेषु न रूक्षेषु न मर्म्मसु।
स्वभ्यस्तेऽपि विषे यस्माद् वर्ज्जनीयान् विवर्ज्जयेत्।
कटूम्लतैललवणादिवस्वप्नातपानलान्।

रुक्षमन्नं विशेषेण भयं वा ऽजीर्णतः सदा ।
दृग्विभ्रमं कर्णरुजामन्यांश्चानिलजान् गदान् ।
विषं रुक्षाशिनः कुर्य्यान् मृत्युमेव त्वजीर्णतः ।

यौगिकस्य मूलविषस्य शोधननाह—

चलं गोमूत्रसंयुक्तमातपे शोषयेत् त्र्यहम् ।
विषं बृंहण मेतद्धि विषस्यादौ प्रशस्यते ।

विविधव्याधिषु विषयोगं दर्शयति—

तत् पिवेत् मस्तुना वातज्वरे चीरेण पैत्तिके ।
युक्तं मूत्रेण कफजे सर्व्वजे त्रिफलाम्भसा ।
शिलाजतु विषं मूत्रमुदावर्त्ताश्मरीहरम् ।
गोमूत्रक्षारसिन्धूत्थविषं पाषाणभेदकम् ।
वज्रवद्दारयेत्येतदान्तकं पोतमश्मरीं ।
समूलपिप्पलीमूत्रं विषं शूलहरं तथा ।
त्रिफलासर्ज्जिकाक्षारो विषं गुल्मप्रभेदनम् ।
प्लीहोदरघ्नं पयसा शताह्वक्रिमिजित् विषम् ।
वायसी मूलनिःक्वाथपीतं कुष्ठहरं विषम् ।

इति विषोपयोगीयोनाम एकविंशोऽध्यायः ।

विषतन्त्रम् सम्पूर्णम् ।

# मूलादि-स्थावरविष-सूची ।

| नाम | विषाधिष्ठानं | पवाङ्कः | पीतलक्षणं | विषवेगः | चिकित्सा |
|---|---|---|---|---|---|
| अन्लपाचकं | त्वक्सारनिर्य्यासविषम् | ३ | ६ | १० | ७०-७५ |
| अश्वमारं | मूलविषम् | २ | ७ | " | " |
| इभगन्धा | फलविषम् | २ | ६ | " | " |
| करघाटः | मूलविषम् | २ | ७ | " | " |
| करघाटः | त्वक्सारनिर्य्यासविषम् | ३ | ६ | " | " |
| करम्भः | मूलविषम् | २ | ७ | " | " |
| करम्भः | पत्रविषम् | २ | ६ | " | " |
| करम्भः | फलविषम् | २ | ६ | " | " |
| करम्भः | पुष्पविषम् | ३ | ६ | " | " |
| कर्कटकः | कन्दविषम् | ३ | ८ | " | " |
| कर्कोटकः | फलविषम् | ३ | ६ | " | " |
| कर्द्दमकः | कन्दविषम् | ३ | ७ | " | " |
| कर्त्तरीयः | त्वक्सारनिर्य्यासविषम् | ३ | ६ | " | " |
| कादम्बः | पुष्पविषम् | ३ | ६ | " | " |
| कालकूटः | कन्दविषम् | ३ | ७ | " | " |
| कुमुद्वती | फलविषम् | ३ | ६ | " | " |
| कुमुदघ्नी | क्षीरविषम् | ३ | ६ | " | " |
| केसरं * | कन्दविषम् | ५ पाठटीका अयौगिकं | | | |

* रसेन्द्रसारसंग्रहटीकाकृद् गोपालेनोक्तम् ।

| नाम | विषाधिष्टानं | पत्राङ्कः | पीतलक्षणं | विषवेगः | चिकित्सा |
|---|---|---|---|---|---|
| कौश्मिरं * | कन्दविषम् | ,, | ,, | ,, | ,, |
| क्रीतकं | मूलविषम् | २ | ७ | ,, | ,, |
| खद्योतकं | फलविषम् | २ | ६ | ,, | ,, |
| गर्गरकं | मूलविषम् | २ | ७ | ,, | ,, |
| गुञ्जा | ,, | २ | ७ | ,, | ,, |
| ग्रन्थिकं * | कन्दविषम् | ५ पादटीका | अयौगिकं | | |
| चर्म्मरी | फलविषम् | २ | ६ | ,, | ,, |
| जालचौरि | चीरविषम् | ३ | ६ | ,, | ,, |
| दर्दुरं * | कन्दविषम् | ५ पादटीका | अयौगिकं | ... | ... |
| दार्व्विकं * | कन्दविषम् | ,, | ,, | ... | ... |
| धुस्तूरकः | मूलपत्र फलविषम् | ,, | ८ | ,, | ,, |
| नन्दनं | फलविषम् | २ | ६ | ,, | ,, |
| नन्दनं | त्वक्सारनिर्य्यासविषम् | ३ | ६ | ,, | ,, |
| पालकं | कन्दविषम् | ३ | ७ | ,, | ,, |
| प्रदीपनः † | कन्दविषम् | ४ | | ,, | ,, |
| (प्र)पुण्डरीकः | कन्दविषम् | ३ | ८ | ,, | ,, |
| फेनाश्मभस्म | धातुविषम् | ३ | ६ | ,, | ,, |
| वत्सनाभः | कन्दविषम् | ३ | ७ | ,, | ,, |
| वरदारु | पत्रविषम् | २ | ६ | ,, | ,, |

* रसेन्द्रसारसंग्रहटीकाकृद् गोपालेनोक्तत् ।.

† राजनिघण्टुकारनरहरिणा प्रोक्तम् ।

| नाम | विषाधिष्ठानं | पत्राङ्कः | पीतलचणं | विषवेगः | चिकित्सा |
|---|---|---|---|---|---|
| वराटकः | त्वक्सारनिर्य्यासविषम् | ३ | ६ | ,, | ,, |
| वल्लीजं | पुष्पविषम् | ३ | ६ | ,, | ,, |
| विजया | मूलविषम् | २ | ७ | ,, | ,, |
| विद्युत्शिखा | ,, | २ | ७ | ,, | ,, |
| विषपत्रिका | पत्रविषम् | २ | ६ | ,, | ,, |
| वेत्रम् | पुष्पविषम् | ३ | ६ | ,, | ,, |
| वैराटकः | कन्दविषम् | ३ | ८ | ,, | ,, |
| महाकरम्भः | पत्रविषम् | २ | ६ | ,, | ,, |
| महाकरम्भः | फलविषम् | २ | ६ | ,, | ,, |
| महाकरम्भः | पुष्पविषम् | ३ | ६ | ,, | ,, |
| महाविषं | कन्दविषम् | ३ | ,, | ,, | ,, |
| मुस्तकं | ,, | ,, | ८ | ,, | ,, |
| मूलकं | ,, | ,, | ८ | ,, | ,, |
| यमदंष्ट्रा * | ,, | ५ | अयौगिकं | ... | ... |
| रक्तशृङ्गी * | ,, | ,, | ,, | ,, | ,, |
| रेणुकः | फलविषम् | २ | ६ | ,, | ,, |
| रेणुका | ,, | २ | ६ | ,, | ,, |
| लम्बा | पत्रविषम् | २ | ६ | ,, | ,, |
| शक्तुकं * | कन्दविषम् | ४ | यौगिकं | ,, | ,, |
| शृङ्गीविषं (शृङ्गिकः) | कन्दविषं | ४ | ८ | ,, | ,, |

* राजनिघण्टुकारनरहरिणा प्रोक्तम् ।

| नाम | विषाधिष्ठानं | पत्राङ्क: | पीतलक्षणं | विषवेग: | चिकित्सा |
|---|---|---|---|---|---|
| सर्पघातो | फलविषम् | २ | ६ | ,, | ,, |
| सर्षप: | कन्दविषम् | ३ | ७ | ,, | ,, |
| सारपाकं | फलविषम् | २ | ६ | ,, | ,, |
| सुगन्ध: | मूलविषम् | २ | ७ | ,, | ,, |
| सैकतम् † | कन्दविषम् | ५ | पाकटीका यौगिकम् | ,, | ,, |
| सौराष्ट्रिकं * | ,, | ४ | यौगिकम् | ,, | ,, |
| सौरीयक: | त्वक्सारनिर्य्यासविषम् | ३ | ६ | ,, | ,, |
| स्नुही | क्षीरविषम् | ३ | ६ | ,, | ,, |
| हरितालं | धातुविषम् | ३ | ८ | ,, | ,, |
| हालाहलं | कन्दविषम् | ३ | ८ | ,, | ,, |

---

## सर्प-नाम-जाति-दष्टलक्षण-विषवेग-चिकित्सा-सूची ।

| नाम । | जाति: । | दष्टलक्षणं । | विषवेग: । | चिकित्सा । |
|---|---|---|---|---|
| अङ्गलराजि: | राजिल: | २४ | ३२।३३ | ७५—८७ |
| अजगर: | निर्व्विष: | ,, | ,, | ,, |
| अग्निक: | मण्डली | ,, | ३२।३३ | ,, |
| अन्धाहिक: | निर्व्विष: | ,, | ,, | ,, |

† रसेन्द्रसारसंग्रहटीकाकृद् गोपालिनोक्तं ।

* राजनिघण्टुकारनरहरिणा प्रोक्तम् ।

| नाम | जातिः | दष्टलक्षणं | विषवेगः | चिकित्सा |
|---|---|---|---|---|
| अलगर्द्दः | दर्व्वीकरः | ,, | ३१ | ,, |
| अहिपताकः | निर्विषः | ... | ... | ... |
| आदर्शमण्डलः | मण्डली | ,, | ३२।३३ | ,, |
| आशीविषः | दर्व्वीकरः | ,, | ३१ | ,, |
| ऋजुसर्पं | ,, | ,, | ,, | ,, |
| एणीपदः | मण्डली | ,, | ३२।३३ | ,, |
| ककुदः | दर्व्वीकरः | ,, | ३१ | ,, |
| कर्द्दमकः | राजिलः | ,, | ३२।३३ | ,, |
| कलुषः | मण्डली | ,, | ,, | ,, |
| कषायः | ,, | ,, | ,, | ,, |
| किक्किसादः | राजिलः | ,, | ,, | ,, |
| कृष्णसर्पः | दर्व्वीकरः | ,, | ३१ | ,, |
| कृष्णोदरः | ,, | ,, | ,, | ,, |
| चोरिका | निर्व्विषः | ... | ... | ... |
| खण्डफणः | दर्व्वीकरः | २४ | ३१ | ,, |
| गलगोली | निर्व्विषः | ,, | ,, | ,, |
| गवेधुकः | दर्व्वीकरः | २४ | ३१ | ,, |
| गिरिसर्पः | ,, | २४ | ,, | ,, |
| गोधूमकः | राजिलः | ,, | ३२।३३ | ,, |
| गोनसः | मण्डली | ,, | ,, | ,, |
| गौराहिकः | निर्व्विषः | ... | ... | ... |

| नाम | जातिः | दष्टलक्षणं | विषवेगः | चिकित्सा |
| --- | --- | --- | --- | --- |
| चक्रकः | राजिलः | २४ | ३२।३३ | ,, |
| चित्रकः | मण्डली | ,, | ,, | ,, |
| चित्रमण्डलः | ,, | ,, | ,, | ,, |
| ज्योतिरथः | निर्व्विषः | ... | ... | ... |
| तृणशोषकः | राजिलः | २४ | ३२।३३ | ७५—८७ |
| दधिमुखः | दर्व्वीकरः | ,, | ३१ | ,, |
| दर्भपुष्प | ,, | ,, | ३१ | ,, |
| दर्भपुष्पः | राजिलः | ,, | ३२।३३ | ,, |
| दर्भपुष्पकः | सङ्करसन्ततिः | २८ | ,, | ,, |
| दिव्यकः | निर्व्विषः | ... | ... | ... |
| दिव्येलकः | सङ्करसन्ततिः | २८ | ३२।३३ | ,, |
| पद्मः | दर्व्वीकरः | २४ | ३१ | ,, |
| पनसः | मण्डली | ,, | ३२।३३ | ,, |
| परिसर्पः | दर्व्वीकरः | ,, | ३१ | ,, |
| पारावतः | मण्डली | ,, | ३२।३३ | ,, |
| पालिन्दिरः | ,, | ,, | ,, | ,, |
| पिङ्गलतन्तुकः | ,, | ,, | ,, | ,, |
| पुण्डरीकः | राजिलः | ,, | ,, | ,, |
| पुण्डरीकः | दर्व्वीकरः | ,, | ,, | ,, |
| पुष्पकः | निर्विषः | ... | ... | ... |
| पुष्पपाण्डुः | मण्डली | ,, | ३२।३३ | ,, |

| नाम | जाति: | दष्टलक्षणं | विषवेग: | चिकित्सा |
|---|---|---|---|---|
| पुष्पाभिकीर्ण: | दर्व्वीकर: | २४ | ३१ | ,, |
| पुष्पाभिकीर्ण: | सङ्करसन्तति: | २८ | ३२।३२ | ,, |
| पुष्पशकली | निर्विष: | ... | ... | ... |
| पृषत: | मण्डली | २४ | ३२।३२ | , |
| पोटगल: | सङ्कर: | २८ | ,, | ,, |
| पोटगल: | सङ्करसन्तति: | २८ | ,, | ,, |
| वभ्रु | मण्डली | २४ | ,, | ,, |
| वलाहक: | दर्व्वीकर: | ,, | ३१ | ,, |
| वर्षाहिक: | निर्विष: | ... | ... | ... |
| विन्दुराजि: | राजिल: | २४ | ३३।३४ | ,, |
| विष्किर: | दर्व्वीकर: | ,, | ३२ | , |
| वृक्षेशय: | निर्विष: | ... | ... | ... |
| वृद्धगोनस: | मण्डली | २४ | ३२।३२ | ७५—८७ |
| वेणुपत्रक: | ,, | ,, | ,, | ,, |
| वैल्लितक: | सङ्करसन्तति: | २८ | ,, | ,, |
| भ्रुकुटीमुख: | दर्व्वीकर: | २४ | ३१ | ,, |
| मदन: | मण्डली | ,, | ३२।३२ | ,, |
| महाकृष्ण: | दर्व्वीकर: | ,, | ३१ | ,, |
| महाकपोत: | ,, | ,, | ,, | ,, |
| महापद्म: | ,, | ,, | ,, | ,, |
| महापनस: | मण्डली | ,, | ३२।३२ | ,, |

| नाम | जाति: | दष्टलक्षणं | विषवेग: | चिकित्सा |
|---|---|---|---|---|
| महाशिरा: | दर्व्वीकर: | " | ३१ | " |
| महासर्प: | " | " | " | " |
| माकुलि: | सङ्कर: | २८ | ३२।३३ | " |
| मिलिन्दक: | मण्डली | २४ | " | " |
| रक्तमण्डल: | " | " | " | " |
| राजिचित्र: | राजिल: | " | " | " |
| राजिचित्रक: | सङ्करसन्तति: | २८ | " | " |
| रोध्रपुष्प: | मण्डली | २४ | " | " |
| रोध्रपुष्पक: | सङ्करसन्तति: | २८ | " | " |
| लोहिताक्ष: | दर्व्वीकर: | २४ | ३१ | " |
| शङ्कपाल: | " | " | " | " |
| शिशुक: | मण्डली | " | ३२।३३ | " |
| शूकपत्र: | निर्व्विष | ... | ... | ... |
| श्वेतोदर: | दर्व्वीकर: | " | ३१ | " |
| श्वेतकपोत: | " | " | " | " |
| श्वेतमण्डल: | मण्डली | " | ३२।३३ | " |
| श्वेतहनु: | राजिल: | " | " | " |
| षडङ्ग | मण्डली | " | " | " |
| सर्षपक: | राजिल: | " | " | " |
| स्निग्धराजि: | सङ्कर: | २८ | " | " |
| हस्ताभरण: | मण्डली | २४ | " | " |

# कीट-नाम-प्रकृति-विषाधिष्ठान-दृष्टलक्षण-चिकित्सा-सूची ।

| नाम | प्रकृतिर्जातिर्वा | विषाधिष्ठानं | दृष्टलक्षणं | चिकित्सा |
|---|---|---|---|---|
| अवल्गुली | सर्व्वदोषप्रकृतिकः | मुखसन्दंशविषः | ४४ | ८२(क) |
| अग्निकीटः | ,, | ,, | ,, | ,, |
| अग्निनामा | वायव्यः | ,, | ४३ | ,, |
| अभिराजिः | ,, | ,, | ,, | ,, |
| अरिमेदकः | अग्निप्रकृतिकः | मुखादिविषः | ४४ | ,, |
| आवर्त्तकः | वायव्यः | मुखसन्दंशविषः | ४३ | ,, |
| उच्चिटिङ्गः | ,, आरविषः | शूकतुण्डविषश्च | ,, | ,, |
| उत्क्लेशकः | अग्निप्रकृतिकः | मुखसन्दंशविष | ४४ | ,, |
| उरभ्रः | वायव्यः | ,, | ४३ | ,, |
| कणभकः | अग्निप्रकृतिकः | ,, | ४४ | ,, |
| कलुषः | वायव्यः | ,, | ४३ | ,, |
| काषायवासिकः | सौम्यः | मलमूत्रविषः | ४४ | ,, |
| किटिमः | ,, | मुखसन्दंशविषः | ,, | ,, |
| कीटगर्द्दभकः | ,, | ,, | ,, | ,, |

(क) वायव्याग्निसौम्यप्रकृतिकानां कीटानां दंशात् क्रमात् वातपित्तकफप्रकोपनं भवत्येव । वातपित्तकफविषातुरस्य च चिकित्सा सर्पविषप्रतिषेधाधिकारे उक्ता, सैवात्र सर्व्वत्रानुष्ठेया । विशेषतस्तु उग्रविषकीटचिकित्सायां—यदुक्तं कीटैर्दष्टानुग्रविषैः सर्पवत् समुपाचरेत् ।

| नाम | प्रकृतिर्जातिर्वा | विषाधिष्ठानं | दष्टलक्षणं | चिकित्सा |
|---|---|---|---|---|
| कुम्भिः | अग्निप्रकृतिकः | ,, | ४४ | ,, |
| कुम्भिनसः | वायव्यः | ,, | ४२ | ,, |
| कृष्णगोधा | सौम्यः | ,, | ४४ | ,, |
| कृष्णतुण्डः | अग्निप्रकृतिकः | ,, | ,, | ,, |
| कोकिलः | सौम्यः | ,, | ,, | ,, |
| कोष्ठागारी | सर्व्वदोषप्रकृतिकः | ,, | ,, | ,, |
| कौण्डिन्यकः | अग्निप्रकृतिकः | मलमूत्रविषः | ,, | ,, |
| क्रमिकरः | सर्व्वदोषप्रकृतिकः | मुखसन्दंशविषः | ,, | ,, |
| क्रिमिसरारी | अग्निप्रकृतिकः | ,, | ,, | ,, |
| क्लीतकः | ,, | ,, | ,, | ,, |
| गर्द्दभो | ,, | ,, | ,, | ,, |
| चिच्चिटिङ्गः | वायव्यः | ,, | ,, | ,, |
| चित्रशीर्षकः | ,, | मुखादिविषः* | ४२ | ,, |
| तालकः | सर्व्वदोषप्रकृतिकः | मुखसन्दंशविषः | ४४ | ,, |
| तुङ्गनाभः | ,, | ,, | ,, | ,, |
| तुङ्गिनास | ,, | ,, | ,, | ,, |
| तुण्डिकेरी | वायव्यः | ,, | ४२ | ,, |
| त्रोटकः | सौम्यः | मलमूत्रविष | ४४ | ,, |
| दुन्दुभिकः | अग्निप्रकृतिकः | मुखसन्दंशविषः | ४४ | ८२ |
| पञ्चशुक्लः | सौम्यः | ,, | ,, | ,, |

* कीटे मुखादिविषे सर्व्वत्र मुखादिशब्देन सन्दंशविशर्द्धितमूत्रपुरीषाणां ग्रहणम् ।

| नाम | प्रकृतिर्जातिर्वा | विषाधिष्ठानं | दृष्टलक्षणं | चिकित्सा |
|---|---|---|---|---|
| पञ्चकृष्णः | ” | ” | ” | ” |
| पञ्चालिकः | अग्निप्रकृतिकः | ” | ” | ” |
| पत्रवृश्चिकः | ” | ” | ” | ” |
| पद्मकीटः | ” | ” | ” | ” |
| पाकमत्स्य | ” | दंष्ट्रानखविषः | ” | ” |
| पिच्चिटः | ” | * | ” | ” |
| प्रचलकः | सौम्यः | दंष्ट्रानखविषः | ” | ” |
| वर्च्चःकीटः | अग्निप्रकृतिकः | मलमूत्रविषः | ” | ” |
| वरटी | ” | आरविषः शूकतुण्डविषश्च | ” | ” |
| वल्लभः | सौम्यः | मुखसन्दंशविषः | ” | ” |
| वाहकः | सर्व्वदोषप्रकृतिकः | ” | ” | ” |
| वाह्यकी | अग्निप्रकृतिकः | ” | ” | ” |
| विचिलकः | सर्व्वदोषप्रकृतिकः | ” | ” | ” |
| विनासिका | अग्निप्रकृतिकः | ” | ” | ” |
| विन्दुलः | ” | ” | ” | ” |
| विश्वम्भरः | सौम्यः | आरविषः | ४४।४८ | ” |
| वैदली | वायव्यः | मुखसन्दंशविषः | ४२ | ” |
| ब्रह्मागिका | अग्निप्रकृतिकः | ” | ४४ | ” |
| भ्रमरः | ” | शूकतुण्डविषः | ” | ” |
| मकरः | ” | दंष्ट्रानखविषः | ” | ” |

* विषाधिष्ठानं नोक्तम्।

| नाम | प्रकृतिर्जातिर्वा | विषाधिष्ठानं | दष्टलक्षणं | चिकित्सा |
|---|---|---|---|---|
| मण्डलपुच्छक: | सर्व्वदोषप्रकृतिक: | मुखसन्दंशविष: | " | " |
| मयूरिका | वायव्य: | " | ४३ | " |
| रक्तराजि: | " | पित्तविष: | " | " |
| शतकुलीरक: | " | मुखसन्दंशविष: | " | " |
| शतपदक: | अग्निप्रकृतिक: | * | " | " |
| शतबाहु: | वायव्य: | मुखसन्दंशविष: | " | " |
| शम्बूक: | सर्व्वदोषप्रकृतिक: | दंष्ट्रानखविष: | ४४ | " |
| शरावकूर्द: | वायव्य: | मुखादिविष: | ४३ | " |
| शृङ्गी | " | शूकतुण्डविष: | " | " |
| सर्षपिक: | सर्व्वदोषप्रकृतिक: | * | ४४ | " |
| सारिकामुख: | वायव्य: | मुखादिविष: | ४३ | " |
| सूचीमुख: | सौम्य: | मुखसन्दंशविष: | ४४ | " |
| सैरेय: | " | " | " | " |

व्यक्तव्यम्—गृहगोधिका-चिपिट राजोमत्स्य-समुद्रवृश्चिक-शतदारुक-वरटीमत्स्य-शकलीमत्स्य-चरकीमत्स्य-सूक्ष्मतुण्ड-शूकवल्लभिकानां विषाधिष्ठानान्युक्तान्यपि कीटसंख्यायां ते ते कीटा नामतो नोक्ता: ।

* विषाधिष्ठानं नोक्तम् ।

# एकजातीयकीटनामादि-सूची ।

| नाम | प्रकृतिर्जातिर्वा | विषाधिष्ठानं | दृष्टलक्षणं | चिकित्सा |
|---|---|---|---|---|
| अग्निप्रभा | शतपद्यजातिः | मुखसन्दंशविषः | ४७ | ८५ |
| अङ्गुलिका | पिपीलिकाजातिः | " | ४८ | ८६ |
| अपराजिता | कणभजातिः | " | ४६ | ८५ |
| कपिलिका | शतपद्यजातिः | " | ४७ | ८५ |
| कपिलिका | पिपीलिकाजातिः | " | ४८ | ८६ |
| कान्तारिका | मक्षिकाजाति | " | ४९ | ८६ |
| काषायी | " | " | " | " |
| कुणी | कणभजाति | " | ४६ | ८५ |
| कुहकी | मण्डूकजातिः | दंष्ट्रानखविषः | ४८ | " |
| कृष्णा | शतपद्यजातिः | मुखसन्दंशविषः | ४७ | " |
| कृष्णः | मण्डूकजातिः | दंष्ट्रानखविषः | ४८ | " |
| कृष्णा | मक्षिकाजातिः | मुखसन्दंशविषः | ४९ | ८६ |
| कृष्णः | मशकजातिः | " | " | " |
| कौटिकः | मण्डूकजातिः | दंष्ट्रानखविषः | ४८ | ८५ |
| गलगोली | गलगोलिजातिः | मुखसन्दंशविषः | ४७ | " |
| चित्रा | शतपद्यजातिः | " | " | " |
| चित्रवर्णा | पिपीलिकाजातिः | " | ४८ | ८६ |
| त्रिकण्टकः | कणभजातिः | " | ४६ | ८५ |
| निरुपमः | गौधेरकजातिः | " | ४७ | ८६ |
| परिमण्डलः | मशकजातिः | " | ४९ | ८६ |
| परुषा | शतपद्यजातिः | " | ४७ | ८५ |
| पार्वतीयः | मशकजातिः | " | ४९ | ८६ |

| नाम | प्रकृतिर्जातिर्वा | विषाधिष्ठानं | दष्टलक्षणं | चिकित्सा |
|---|---|---|---|---|
| पिङ्गलिका | मक्षिकाजातिः | ,, | ४९ | ,, |
| पिङ्गाभासः | गौधेरकजातिः | ,, | ४७ | ,, |
| पौतिका | शतपद्यजातिः | ,, | ,, | ९५ |
| प्रतिसूर्य्यः | गौधेरकजातिः | ,, | ,, | ९६ |
| बहुवर्णः | ,, | ,, | ,, | ,, |
| ब्राह्मणिका | पिपीलिकाजातिः | ,, | ४८ | ,, |
| भृकुटी | मण्डूकजातिः | दंष्ट्रानखविषः | ,, | ९५ |
| मधुलिका | मक्षिकाजातिः | मुखसन्दंशविषः | ४९ | ९६ |
| महाशिराः | गौधेरकजातिः | ,, | ४७ | ,, |
| यववर्णाभः | मण्डूकजातिः | दंष्ट्रानखविषः | ४८ | ९५ |
| रक्तः | शतपद्यजातिः | मुखसन्दंशविषः | ४७ | ,, |
| रक्तमण्डला | गलगोलिजातिः | ,, | ,, | ,, |
| रक्तराजी | ,, | ,, | ,, | ,, |
| श्वेतकृष्णा | ,, | ,, | ,, | ,, |
| श्वेता | शतपद्यजातिः | ,, | ,, | ,, |
| सामुद्रः | मशकजातिः | ,, | ४९ | ९६ |
| सारः | मण्डूकजातिः | दंष्ट्रानखविषः | ४८ | ९५ |
| सर्व्वश्वेता | गलगोलिजातिः | मुखसन्दंशविषः | ४७ | ,, |
| सर्षपिका | ,, | ,, | ,, | ,, |
| संवाहिका | पिपीलिकाजातिः | ,, | ४८ | ९६ |
| स्थालिका | मक्षिकाजातिः | ,, | ४९ | ,, |
| स्थूलशीर्षा | पिपीलिकाजातिः | ,, | ४८ | ,, |
| हरितः | मण्डूकजातिः | ,, | ,, | ९५ |
| हस्तिकक्षः | कणभजातिः | ,, | ४६ | ,, |
| हस्तिमशकः | मशकजातिः | ,, | ४९ | ९६ |

# मूषिक-नाम-विषाधिष्ठान-दष्टलक्षण-चिकित्सा-सूची ।

| नाम | विषाधिष्ठानं | दष्टलक्षणं | चिकित्सा |
| --- | --- | --- | --- |
| अजितः | शुक्रविषः | ३८ | ८८ |
| अलसः | ” | ” | ८८ |
| अरुणः | ” | ४० | ८८ |
| कपिलः | ” | ३८ | ” |
| कपिलाखुः | ” | ” | ” |
| कपोताभः | ” | ४० | ” |
| कषायदन्तः | ” | ३८ | ८८ |
| कुलिङ्गः | ” | ” | ” |
| कृष्णः | ” | ” | ” |
| कोकिलः | ” | ४० | ८८ |
| चपलः | ” | ३८ | ” |
| चिक्किरः | ” | ३८ | ८८ |
| छुछुन्दरः | ” | ” | ” |
| पुच्छकः | ” | ३८ | ” |
| महाकृष्णः | ” | ४० | ८८ |
| लालनः | ” | ३८ | ८८ |
| श्वेतः | ” | ४० | ८८ |
| हंसिरः | ” | ३८ | ८८ |

# लूतानाम-विषाधिष्ठान-दष्टलक्षण-चिकित्सा-सूची।

| नाम | विषाधिष्ठानं | दष्टलक्षणं | चिकित्सा |
|---|---|---|---|
| अग्निवर्णा | लालादिविषः * | ५५ | ९९।१०० |
| आलविषा | ” | ५४ | ९९।१०० |
| एणीपदी | ” | ५६ | असाध्यः।९९ |
| कपिला | ” | ५४ | ९८।१०० |
| कसना | ” | ५५ | ९९।१०० |
| काकाण्डा | ” | ५६ | असाध्यः।९९ |
| कृष्णा | ” | ५५ | ९९।१०० |
| जालिनी | ” | ५६ | असाध्यः।९९ |
| त्रिमण्डला | ” | ४४ | ९९।१०० |
| पीतिका | ” | ५६ | ९८।१०० |
| मालागुणा | ” | ” | असाध्यः १००।९९ |
| मूत्रविषा | ” | ५५ | ९९।१०० |
| रक्ता | ” | ५५ | ९९।१०० |
| लाजवर्णा | ” | ५४ | असाध्यः।९९ |
| श्वेता | ” | ” | ९८।१०० |
| सौवर्णिका | ” | ५५ | असाध्यः।९९ |

* लालादिपदेन मूत्रपुरीषमुखसन्दंशनखशुक्रार्त्तवानां ग्रहणं।

# विषतन्त्र-परिशिष्टम् ।

## (१) अर्कः ।

मारकमात्रा—३२ रक्तिका स्ततोऽधिकं वा । क्षीरस्यापि विषादजनकत्वमस्ति ।

विषलक्षणं—वमनं सविरेचनं । तीव्रं शूल मुदरे । मुखोष्ठयो रग्निदग्धवत् पाकः ।

## (२) अमृतं—शृङ्गीविषम् ।

मारकमात्रा—कन्दचूर्णं—३२ रक्तिकास्ततोऽल्पं वा । भेदाः—विपणिसुलभस्यामृतस्य चत्वारो भेदा दृश्यन्ते ।* मारककालः—द्वित्रिपलात् पञ्चदण्डाभ्यन्तरेण प्रायो मारयति ।

विषलक्षणम्——

(१) ओष्ठयोरामाशयं यावद्दाहः, लालास्रावः ।

(२) कोठोत्पत्तिः, अङ्गेषु शूलं, अङ्गानां स्रस्तता सुप्तता च ।

(३) भृशंवमनं विरेकश्च, मूत्ररोधः, मूत्रकृच्छ्रता वा ।

(४) कनीनिकयोरादौ सङ्कोचस्ततो विस्तृतिः, दृष्टिर्निमेष-वर्जिता प्रतिबद्धा च. दर्शनशक्तिर्मन्दा ।

(५) नाड़ी तन्वी, क्षीणा, वेगवती, विषमा, विलुप्तप्राया च, उच्छ्वासनिरोधश्च ।

(६) निःश्वासोच्छ्वासः—निरुद्धइव, धीरः, गूढ़ः, विषमः आक्षेपमूलश्च ।

(७) संज्ञा न किञ्चिदपि विकृतिमाप्नोति ।

(८) कण्ठरोध इव, गलाधःकरणकृच्छ्रता च ।

---

* Aconite Napellus ; A. Ferox ; A. Palmatum ; A. Heterophyllum.

## (३) अहिफेनम् ।

विषतत्त्वम्—अहिफेनस्य विषत्वं तदधिष्ठितस्य 'मरफाइन' इत्याख्यस्य वीर्य्यस्य मात्रापेक्षि । तच्च वीर्य्यं विपणिसुलभे, भारतजाते उपादेये, वाह्लीकजाते श्रेष्ठे चाहिफेने क्रमात् क्षीन-मध्यमोत्तममात्रया विद्यते ; अतस्तेषां विषादजनकत्वमपि तथैव भवति ।

मारकमात्रा—

| | |
|---|---|
| विशुद्धनिर्य्यासस्य ... ... | ४—५ ग्रेण । |
| अशुद्धस्य ... ... | ८ ग्रेण । |
| अहिफेनार्कस्य ... ... | २—८ ड्राम । |
| 'मरफाइन' इत्याख्यस्य तद्वीर्य्यस्य | २ ग्रेण । * |

मारककालावधिः—क्वचित् १५—३० दण्डाभ्यन्तरे, सामान्यतः २५ दण्डाभ्यन्तरेण मारयति । विषलक्षणप्रादुर्भावः—दन्त-द्वयाभ्यन्तरेण ।

विषलक्षणं द्विविधं—प्रायोदृष्टं क्वचिद्दृष्टञ्च । तत्र प्रायोदृष्टं यथा—

(१) क्षणं मूढ़इव तिष्ठतीति दृष्ट्वा संशयोभवति कथमय-मेवम्भूतो जातः ।

(२) शिरःपीड़ा, कर्म्मष्वनुत्साहः साद्धं पतनशङ्कया शिरो-घूर्णनम्, तन्द्रा, इन्द्रियमोहः, अरिष्टभूता निद्रा ।

(३) आदौ अक्षिकनीनिकायाः सङ्कोचः सूच्यग्रोपमः, प्रलङ्घायां तु अरिष्टभूतायां निद्रायां सैव विस्तृतिमाप्नोति ।

---

* १ ग्रेण = $\frac{८}{१५}$ रक्तिकं ( प्रायोऽर्द्धरक्तिकं )

१ ड्राम = ३२ रक्तिकाः ।

(४) आदौ निःश्वासोच्छ्वासः प्रमाणाधिकः ततो मन्थरः निद्रितस्येव नासाध्वनिस्सनाथस्ततः कृच्छ्रात् श्वसिति गाढ़ं मुखेनैव।

(५) मुखस्य पाण्डुत्वं, ओष्ठयोर्नीलता, नासारन्ध्रयोः फेनागमः।

(६) सर्व्वचेष्टोपरमः, परं स्रस्ताङ्गता, सन्निहिते मरणे गुदभगवदनानां सम्वरणशक्तेर्हानिः।

(७) आदावुष्णत्वंत्वचस्ततोहिमत्वं नाड़ी च मृदुगतिः।

क्वचिद्दृष्टं लक्षणं यथा—

(१) हस्तपदविक्षेपः, विशेषतः शिशोः, मात्राधिक्यात् सर्व्वेषाम्।

(२) वमनं विरेचनञ्च। यद्येतदरिष्टभूताया निद्रायाः पूर्व्वं जायते तदा विषमुक्तिर्भवति।

(३) कनीनिकाविस्तारः—विशेषतश्च पूर्व्वं मरणात्।

(४) प्रलापः, अपस्मारिवत् हस्तपदविक्षेपः, सुप्तता च।

(५) दृष्टेऽप्यारोग्यलक्षणे कदाचिदकस्मात् घोरतरो भूत्वा यन्मृत्यवे याति तोद्‌दुनिर्हरत्वादपाकित्वाच्च विषस्य, सहसा निःश्वासोच्छ्वासनिरोधाद्वा।

## (४) करवीरः—श्वेतपुष्पः पीतपुष्पश्च।

विषाधिष्ठानम्—श्वेतपुष्पः—मूलपत्रत्वक्पुष्पविषम्; पीतपुष्पः—फलक्षीरविषम्।

मारकमात्रा—मूलादीनां क्वाथः पलार्द्धमानः । फलत्रयाणां शस्यं—चौरं कर्षपादमितम् ।

मारककालः—आचतुर्थदिनम् ।

विषलक्षणम्—

(१) वमनं, शूलमुदरे, निःश्वासोच्छ्वासः प्रमाणाधिकः ।

(२) नाड़ी क्षीणा मन्दगतिश्च ।

(३) मुहुर्मुहुराक्षेपः प्रलापश्च । मृदुज्वरः ।

(४) कनीनिकाविस्तारः, अवसादः, हिमाङ्गता, विलुप्तप्राया च नाड़ी ।

## (५) कर्पूरः ।

मारकमात्रा—( अल्पतमा ) त्रयोदशरत्तिकाः ।

विषलक्षणम्—

(१) वान्तवस्तुनि निःश्वासोच्छ्वासे च कर्पूरगन्धः ।

(२) अरिष्टभूता निद्रा, सर्व्वाङ्ग आक्षेपो वा, कृच्छ्रेण श्वसिति, घर्मस्रुतिर्हिमाङ्गत्वं, संज्ञानाशः, विलुप्तप्राया च नाड़ी ।

(३) क्लमः, अवसादः जीवनयोनिप्रयत्नानां विकलता । मुखस्य रुधिरपूर्णत्वमिव ।

(४) सर्व्वाङ्गगोदाहः ।

(५) कनीनिका विस्तारः—दर्शनशक्तिर्मुहुर्मुहुर्व्यापन्ना ।

## (६) जयपालः ।

मारकमात्रा—वीजानां—
स्नेहस्य १५—२० विन्दवः ।

विषलक्षणम्—शूलमुदरे, आमाशयान्त्राणां भृशं विदाहः, रक्तोन्मिश्रितं वमनं विरेचनञ्च ।

(२) नीलगात्रत्वं, हिमाङ्गत्वं नाड़ी च विलुप्तप्राया द्रुतं भवति ।

(३) मूत्राघातो मूत्रकृच्छ्रता वा ।

पटोलमूलस्यापि विषलक्षणमेतादृगेव ।

## (७) तुत्थम् ।

मारकमात्रा—२५६ रक्तिकाः

मारककालः—दशदण्डाभ्यन्तरेण मारयति ।

विषलक्षणम्—द्विविधं तीव्रतरं मन्दञ्च ।

तत्र तीव्रतरं यथा—

(१) उपस्थितवमनत्वं, वमनं—नीलं हरिदाभं वा, लालास्रावः ।

(२) उदरे शूलं, वायुपूर्णत्वमिवोदरस्य ।

(३) पुरीषं हरिदाभं सरक्तञ्च, कामला ।

(४) शिरःपीड़ा, आक्षेपः, पक्षाघातः, क्रमः अरिष्टभूता निद्रा ।

(५) कृच्छ्रेण श्वसनं । त्वक् शीता कर्दमवत् । मूत्राघातः ।

मन्दं यथा—

(१) प्रतिश्यायः, लालास्रावः, दन्तवेष्टेषु लोहितकृष्णा लेखोत्पत्तिः, आस्यस्याद्य ताम्रवत् स्वादः ।

(२) अजीर्णमतीसारः, शूलं, सकुन्थनं मलोत्सर्गः । कामला, नीलं वमेत् ।

(३) हस्तपदकम्पः—गतिग्रहणशक्तिहानिः, रक्ताल्पत्वं, कार्श्यम् ।

## (८) धुस्तूर—श्वेतःकृष्णःपीतश्च ।

मारकमात्रा—बीजानां शतं तदधिकम् वा ।

मारककालः—त्रिंशत् दण्डाभ्यन्तरेण मारयति ।

विषलक्षणम्—

(१) अतितूर्णं विषलक्षणाविर्भावो भवति । तिक्तास्यत्वं, मुखकण्ठयोर्लौहितपूर्णत्वं शुष्कता च, तृष्णा, गलाधःकरणकृच्छ्रता, मुखगलगतश्लेष्मधराकलाया रक्तत्वम् ।

(२) नाड़ीस्थूला द्रुता च । उष्मणोवृद्धिः ।

(३) निःश्वासोच्छ्वासः प्रमाणाधिकः ।

(४) कनीनिका भृशं तता । नेत्रं रक्तपूर्णमुच्छूनञ्च, सर्व्वं कृष्णं पश्यति, विप्रकृष्टं वस्तु सन्निहितमिव सन्निहितञ्च क्षुद्रं विपुलमिव पश्यति ।

(५) त्वक् उष्णा शुष्का च—रक्तवर्णः कोठोत्पत्तिः ।

(६) शिरःपीड़ा, पतनाशङ्कया सह शिरोभ्रमः, अस्थिरता, बीभत्स्याऽऽलेख्यहिंस्रजन्तुविषयिनी अमूलकचिन्ता, अङ्गुल्यग्रस्थितस्य सूत्रस्य ग्रहणं नाटयति ।

(७) तन्द्रा, मूढ़त्वं, अरिष्टभूता निद्रा, सर्व्वाङ्ग आक्षेप स्ततो मृत्युः ।

## (९) विषतिन्दुकः ('कुचिला' इति लोके) ।

विषाधिष्ठानं—फलविषम् । मारकमात्रा—बीजचूर्ण—षोड़शरत्तिकाः ।

मारककाल:—त्रिचतु:पलात् पञ्चदण्डसप्तदण्डाभ्यन्तरेण वा मारयति ।

विषलक्षणम्—

(१) आक्षेप: अनन्तरं वेगह्रानि: पुनराक्षेप: पुनर्वेगह्रानिरित्येवम् । भृशं तिक्तास्यता, सा च चिरं तिष्ठति, शर्करादिसेवनेनापि न याति ।

(२) अस्थिरता, सोत्कण्ठमुच्छ्वासनिरोधमाशङ्कते ।

(३) सर्व्वगात्रकम्प:, तदनु सहसातिवेगेन धनुस्तम्भवदाक्षेप:, तस्मिन्नेव काले मुखसंवृतात्मकोहनुस्तम्भो जायते । परमाक्षेपस्य वेगे गते संवृतास्यता न तिष्ठति ।

(४) नाड़ी वेगवती, कनीनिका विस्फारिता ।

(५) श्रवणं दर्शनञ्च न किञ्चिदपि विकृतिमाप्नोति । संज्ञात्वविकृता तिष्ठत्यामरणात् ।

(६) देहोष्मणोवृद्धि: ।

(७) आक्षेपस्य वेगोपरमे श्रान्तत्वमतीव, परं स्वस्ताङ्गता, घर्म्मस्रुतिश्च । आक्षेपस्य वेगो यदि शीघ्रमायाति चिरञ्च तिष्ठति तदा मरणम् ध्रुवं, अन्यथा विषमुक्ति: स्यात् । नीलगात्रत्वम् ।

## (१०) भल्लातक: ।

मारकमात्रा—अपक्वफलरस:—प्राय: चतु:पञ्चाशद्रत्तिका: ( ५३$\frac{१}{२}$ रत्तिका: ) पक्वफलन्तु निर्विषम् ।

विषलक्षणम्—मुहुर्मुहुर्वमनविरेकाभ्यां हिमाङ्गता, विलुप्तप्राया च नाड़ीभवति । मूत्ररोधो रक्तमूत्रत्वं वा ।

## (११) सम्बलक्षारः—शङ्खिनी।

मारकमात्रा—२-३ ग्रेण।

विषाविर्भावकालः—भक्षणाद् द्वित्रिदण्डाभ्यन्तरेण क्वचिद् विंशपलतः २५दण्डाभ्यन्तरेण वा विषलक्षणाविर्भावो न दुर्लभः।

आमाशयस्थितस्य श्लेष्मणः प्रभावात् सम्बलक्षारस्य विषलक्षणाविर्भावकालो चिराद्भविष्यति।

विषलक्षणम्—अस्य विषलक्षणं त्रिविधं तीव्रतरं तीव्रं मन्दञ्च।

तत्र तीव्रतरं यथा—मुखगते विषे—

(१) उष्णोत्वृद्धिर्दाहस्च।

(२) भृशं तृष्णा सा च पानेनोपशमं याति।

(३) कण्ठस्य शूकपूर्णत्वमिव। कण्ठस्वरस्य कार्कश्यम्। दौर्ब्बल्यम्।

आमाशयगते विषे—

(१) उत्क्लेशः अवसादश्च।

(२) भुक्तस्य मुहुर्मुहुर्वमनं तच्च पानेनैव विवर्द्धते।

(३) पिच्छिलं पित्तरक्तोन्मिश्रं मण्डोदकवत् च वमति।

(४) वमनं तदनु विरेचनं नियमेन भवति।

(५) उदरोर्द्धदेशे दाहः स्पर्शासहत्वञ्च।

अन्त्रगतं विषे—

(१) अन्त्रेषु शूलदाहौ। कुन्थनं न पुनर्मलप्रवृत्तिः। क्वचित् रक्तोन्मिश्रं पुरीषं श्लेष्माणं मण्डोदकवदतिसार्य्यते। गुदं परितो दाहः। वातोल्वणस्य—

अस्थिरत्वं, उत्कण्ठा, अज्ञानता, हिमाङ्गता च। सर्व्वगात्रेषु स्पन्दनं दाहश्च, पादयोः पिण्डिकयोश्च खल्वी आक्षेपश्च। न वमनं नापि विरेकः। अङ्गुलयः सङ्कुचित-त्वचः श्यावाश्च, चिरं जलाभिरमणेन यादृशो भवति तद्वत्; चक्षुषो कोटरागते, स्वरं कार्कश्यं नखानि ईषन्नीलानि, घर्म्म-स्रुतिः, संज्ञालोपो, हिमाङ्गता, विलुप्तप्राया च नाड़ी।

प्रायोदृष्टं लक्षणम्—मूत्रं स्वल्पं स्रवति नैववा। गात्रं बलिभिराक्रान्तमिव। त्वक् शीता कर्द्दमवत्, उष्णा वा। नाड़ी द्रुता, विषमा, क्वचित् कृच्छ्रानुमेया च।

तीव्रं विषलक्षणं यथा—कण्ठस्य उद्ध्वंसः, रक्तता शुष्कता च। शुष्कास्यत्वं, जिह्वाऽऽदौ विदीर्णा ततो रक्ता स्पर्शाक्षमा च। उपस्थितवमनत्वं वमनं वा। कामला, उदरे शूलं, मलस्य सद्रवा प्रवृत्तिः। चक्षुषोः कण्डूः, नयनयोर्मे वालुका प्रविष्टा इति मन्यते। नेत्रशुक्लभागे लौहित्यं विन्दुव्याप्तत्वञ्च। नेत्रवर्त्म शोफयुतं नासास्नुनोः स्रावश्च।

वातोल्वणस्य—अङ्गुलिषु तोदः, तासां स्तब्धता सुप्तता च। अस्थिरत्वं, उत्कण्ठा, सन्निहितो मे मृत्युरिति मन्यते।

मन्दंयथा—पाचकाग्नेर्मान्द्यं विषमता च। आहारो न स्वदते, क्षुन्नाशः, पुरीषस्य क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः, शूलं, लालास्रावः, कण्डूः स्फोटकादीनामुत्पत्तिः, त्वक् विशीर्णा भूत्वा पतति कण्डान्विताच, केशपातः नखभङ्गः, सशोफं कण्डू-

युतश्च नेत्रवर्त्म, नेत्रशुक्लभागे तोदरागौ, कण्ठस्य लौहित्यं, भृशं पेशीशोषः, कामला, पीतगात्रत्वम् ।

## (१२) सीसकम् ।

सीसकोद्भवं आमसिन्दूरं मुद्राशङ्खश्च ।

मारकमात्रा—२५६ रक्तिकाः ।

विषलक्षणं द्विविधं तीव्रतरं मन्दश्च ।

तत्र तीव्रतरं यथा—

(१) आस्यस्य दाहः, कषायता, मधुरत्वञ्च ।

(२) कण्ठः शूकैरावृत इव, तृष्णा ।

(३) दाहश्चामाशये, घनीभूतश्लेष्मवमनं ।

(४) शूलमुदरे, तच्चमर्द्दनेन शमं याति । उदरं स्तब्धं ।

(५) विट्सङ्गः पुरीषञ्च कृष्णम् ।

(६) त्वक् पङ्कवच्छीता, घर्म्म स्रुतिः हिमाङ्गता, संज्ञानाशः विलुप्तप्राया नाड़ी भवति ।

मन्दंयथा—मलिना जिह्वा, निःश्वासस्य दौर्गन्ध्यं, आस्यस्य मधुरता धातुवच्च कोऽपि वैशेषिको गन्धः, दन्तवेष्टेषु नील-रेखोत्पत्तिः, अजीर्णं, भोजनान्तरं उदरस्य गुरुता, क्षुन्नाशः, आमाशये शूलं, विट्सङ्गः अन्त्रशूलं । रक्ताल्पत्वं, अङ्गेषु सन्धिषु च तोदः, आमवातः, हस्तपादयोर्मनःप्रतिकूला चेष्टा, मणि-बन्धवधः, सीसकविषजोन्मादः अपस्मारश्च । अक्षिपीड़ा, शिरो-दुःखं अतत्त्वाभिनिवेशः चित्तविकारः ।

---

# द्रव्यपरिचयः ।

## हिः—हिन्दि भाषानाम ; वाः—वाङ्गाला भाषानाम ।

( टीकायां येषां परिचयोनोक्त स्तेषामेवात्र उल्लेखः क्वचः विस्तरस्तु वनौषधिदर्पणे द्रष्टव्यः )

(१) **अंशुमती**—हिः—सरिवन् । वाः—शालपाणि ।

(२) **अर्कः**—हिः—मन्दार । वाः—आकन्द । अस्य चत्वारोभेदाः—अर्कः, श्वेतार्कः, राजार्कः श्वेतमन्दारकश्च । अलर्कः श्वेतार्कपर्य्यायः । राजार्कः श्वेतमन्दारकश्च श्वेतार्कभेद एव । अङ्गेऽनुक्ते मूलत्वग्ग्राह्या ।

(३) **अङ्कोटः**—हिः—ढेरा । वाः—आँकोड़ । आरण्यवृक्षः, वङ्गे सुलभः । पत्रं प्रायो सहकारपत्रसदृशं, तस्मिन् यून्यगर्भा वर्त्तुलाकृतिः स्फीति दृश्यते । अस्य शाखा तीक्ष्णाग्रा । वसन्ते पुष्पं निदाघे फलं भवति—पुष्पं शुभ्रं सुगन्धि, फलं पक्वं वर्णतः जम्बूतुल्यं आमगन्धि च । बालका भक्षयन्ति । अस्य मूलत्वग् ग्राह्या ।

(४) **अतिबला**—हिः ककहिया । वाः—झाँपिपिटारि । अस्याक्षुपो नरकटीसमानो उच्चतया, पत्रं—रोमान्वितं, पत्रवृन्तं दीर्घं, शरदि पुष्पितं भवति, शीते च फलं परिणमति । फलं विचित्रचक्राकृति अस्या मूलत्वग्ग्राह्या ।

(५) **अम्लः**—(९६ पृः) अम्लवेतसः । बहून्येव द्रव्याणि अम्लवेतसशब्देन व्यवह्रियन्ते प्रामादिकैः । दर्पणेतु अस्य स्वरूपो निर्णीत एव ।

(६) **अम्भोजनाल**—पद्मस्य नालं कण्टकाचितम् नतु मृणालं, मृणालन्तु पद्ममूलमेव ।

(७) **अश्वकर्णः**—शाल इति लोके । यस्य निर्य्यासः सर्ज्जरस इत्युच्यते ।

(८) **अश्वगन्धा**—शाखावहुलः क्षुपःशरदि जायते हिमपाते तु म्रियते ।

पत्र रोमान्वितं प्रायो वृहतीतुल्यं, फलं कलायसदृशं लोहितवर्णं। मूलं तु मूलकवत् अश्वमूत्रगन्धि आमावस्थायां, अतएव अश्वगन्धेति नाम। स्वादस्तु तिक्त एव। अस्या मूलमेव ग्राह्यम्। तत्तु सदैवार्द्रं प्रयोक्तव्यम्। आसवंदन्तु अस्याः पृथगेव।

(९) **असनः**—हिः—आसना, सज्। वाः—पियाशाल। विशाल आरण्यवृक्षः। त्वक् प्रायो विदीर्णा भवति। सारकाष्ठं त्वक् च भेषजार्थं प्रयुज्यते।

(१०) **अक्षकः**—विभीतकः। अस्य फलमेव ग्राह्यम्।

(११) **आम्रातकः**—हिः--आम्बाड़ा। वाः—आमड़ा। अस्य फलं ग्राह्यम्।

(१२) **आरग्वधः**—हिः—अमलतास्। वाः—सोणालु। अन्तःपरिमार्ज्जने प्रायोफलमज्जा क्वचित् मूलत्वक्। वहिःपरिमार्ज्जने सर्व्वत्र पत्रं त्वक् च योज्या।

(१३) **आरुष्करजपुष्पम्**—भल्लातकपुष्पम्। पुष्पं वर्षासु भवति। अस्य आमफलरसं विषम्।

(१४) **अस्फोता**—वाः—हापरमाली। इयं भूलुण्ठिता लता। शाखाग्रभङ्गात् क्षीरं स्रवति। पुष्पं शुभ्रं सुगन्धि च।

(१५) **इङ्गुदी**—'तीक्ष्णकण्टकः', 'क्रोष्टुफलः', 'तैलफलः', 'पूतिगन्ध'इत्यस्य नामान्येव परिचयाय अलम्। वङ्गे त्वयं न सुलभः, हिमगिरिपादेतु सुलभ एव। अस्य फलशस्यं ग्राह्यं तत्तु तिक्तं रेचकञ्च।

(१६) **उशीरं**—सुगन्धि वीरणमूलम्। (१७) **ऋष्यपित्तम्**—भल्लूकपित्तम्। (१८) **एला**—द्विविधा—सूक्ष्मा स्थूला च। सर्व्वत्र एलाशब्देन सूक्ष्मैला ग्राह्या।

(१९) **ककुभः**—हिः—कोह, कौह। वाः—अर्ज्जुन। आरण्यवृक्षः, त्वक् शुभ्रवर्णा स्वादे कषाया पत्रं नरजिह्वावत्। फलं कर्म्मरङ्गवत् किन्तु क्षुद्रम्।

(२०) **कट्फलं**—वणिक्द्रव्यं—दृढ़ा, रक्तवर्णा, स्थूलशुष्का त्वक्। यस्याघ्राणं क्षवथुं जनयति।

(२१) **कदम्बः**—द्विविधः धाराकदम्बः केलिकदम्बश्च। धाराकदम्बो वर्षासु

केलिकदम्बश्च वसन्ते पुष्पितो भवति। धाराकदम्ब उच्चैर्वृक्षः केलिकदम्बस्ततो ह्रस्वतरः शाखाबहुलश्च। अत्र धाराकदम्बमूलं ग्राह्यम्।

(२२) **कपित्थः**—हिः—कैथ्। वाः—कयेद। उच्चैर्वृक्षः। पत्रं क्षुद्रं चिक्कणं सुगन्धि। फलं बृहत् प्रायो बिल्ववत्—फलगात्रं कर्कशं। निदाघशेषे पुष्पं हेमन्ते फलं पक्वं भवति। पक्वं फलं अम्लमधुरं हृद्यञ्च।

(२३) **करञ्जः**—हिः—करञ्जः, किरमाल। वाः—डहरकरञ्जा। प्रधानतः करञ्जो द्विविधः—नक्तमालः पूतिकरञ्जश्च। अयं तैलयोनिफलवर्गे पठितः। अस्य फलं त्वक् च ग्राह्या।

(२४) **कलिङ्गः**—कुटजबीजं। तच्च द्विविधं तिक्तं मधुरञ्च। वङ्गीय-कुटजानां बीजं तिक्तं दाक्षिणात्ये तु मधुरबीजं कुटजं सुलभमेव।

(२५) **काकमाची**—हिः—करैया, भंटकुंया। वाः काकमाशाक। फलपाकान्तः क्षुपः। क्षुद्रं अधोलम्बितं शुभ्रञ्च पुष्पं। शाखा च चतुष्कोणा। फलं बृहतीवत्। पक्वं फलं बालाः भक्षयन्ति।

(२६) **काकादनी**—श्वेता रक्ता वा गुञ्जा। (२७) **कालीयकः**—कुङ्कुमं तच्च काश्मीरजमेव प्रशस्तम्। (२८) **किञ्जल्कः**—पद्मकेशरः। (२९) **किण्वं**—सुराबीजम्। (३०) **किंशुकः**—पलाशस्तस्य बीजं ग्राह्यम्। (३१) **कुटन्नटः**—भद्रमुस्ता।

(३२) **कुलत्थः**—हिः—कलथि कलाय। वर्णभेदेन बहवोभेदाः सन्ति। अयं विपवः, पुष्पं गन्धकवर्णं, कलायं प्रायश्चतुष्कोणं। विषघ्नत्वात् रक्तकुलत्थोऽत्र ग्राह्यः।

(३३) **कुसुम्भपुष्पम्**—हिः—करकुसुम्। वाः—कुसुमफुल। फल-पाकान्तः क्षुपः। पत्रं दीर्घक्षीणं कण्टकाचितञ्च। पुष्पं कुङ्कुमवर्णमतो ग्राम्यकुङ्कुममित्युच्यते। महदरण्यग्राम्यभेदेनास्य त्रयोभेदा दृश्यन्ते। पत्रं शाकार्थं पुष्पञ्च वस्त्र-रञ्जनार्थं व्यवह्रियते। भेषजार्थं पुष्पं ग्राह्यम्।

(३४) **कुष्ठम्**—सुगन्धि मूलं वणिकद्रव्यं। विस्तरस्तु वनौषधिदर्पणे द्रष्टव्यः।

(३५) **कोषातकी**—वा:—घोषालता आर्द्रभूमौ भूलुण्ठितेयं दीर्घा लता वर्षाशेषे जायते। शरदि पुष्पिता भवति, शीते फलं पुष्टं भवति, हिमात्यये फलसहिता लता म्रियते। अस्याः 'सुतिक्ता', 'जालिनी', 'मृदङ्गफला', 'पीतपुष्पा', कटुफलेति संज्ञयैव सुष्ठु परिचयो भवति।

(३६) **क्रमुकः**—पूगफलम् तच्चामं ग्राह्यम्। (३७) **चीरमोरटः**—चीरकड़ार इतिलोके। (३८) **चीरिवृक्षाः**—वटाश्वत्थपर्कटीवकुलोदुम्बराः पञ्चैते चिरिणोवृक्षाः।

(३९) **गरलं**—अभ्रतं मिठाविष इति लोके। (४०) **गृध्रनखी**—केलिकड़ा इति केचित्। स्वरूपतस्तु परिचयः सन्दिग्धः। (४१) **चक्रः**—हिः—चक्वड़। वा:—चाकुन्दे। अस्य वीजं ग्राह्यम्। (४२) **चन्दनं**—श्वेतचन्दनकाष्ठं ; यत्तुसारवत् स्निग्धं निमज्जति अप्सु तदेव प्रशस्तम्।

(४३) **चातुर्जातकम्**—समभागत्वगेलापत्रकेशरम्। (४४) **जटा**—जटामांसीति नाम वणिक्द्रव्यम्। (४५) **जाङ्गलं**—जाङ्गलं मांसं शिखिखरादिजन्तुमांसम्। (४६) **जालिनी**—घोषालता इति उक्तपूर्व्वा।

(४७) **तण्डुलीयकः**—हिः—चौलाइका शाक। वा:—चाँपानटे। (४८) **ताम्रवल्ली**—मञ्जिष्ठा इति लोके। (४९) **तालीसकम्**—तालीसकवृक्षः सिन्धुतीरे हिमवत्पाददेशे च जायते। गोमेषादयः अस्य सशाखं पत्रं भक्षयन्ति। पत्रे चास्ति कश्चिद् विलक्षणो गन्धः। कर्त्तितक्षुद्रशाखासहितं पत्रं लभ्यते वणिग्भ्यः प्रयुज्यते च भेषजार्थम्। (५०) **तिलः**—सन्ति तिलानां बहवो भेदाः। तत्र कृष्णतिलः प्रशस्तः एव। (५१) **तुङ्गः**—पुन्नागवृक्षः। (५२) **देवदाली**—पीतपुष्पघोषकः। (५३) **धवः**—धाओयागाछ इति लोके। (५४) **नलः**—हिः नरसल्। वा:—नल। (५५) **नलदम्**—लामज्जकः। (५६) **नाकुली** सर्पसुगन्धा तदभावे मरिचं श्वेतकण्टकारी वा। (५७) **नीलिनी**—क्षुपादस्मादाकृष्टो घनीभूतसारः रञ्जनार्थं व्यवह्रियते। समग्रः क्षुपो व्यवह्रियते भेषजार्थम्।

(५८) **पटोलं**—नाड़ीसहितं पत्रं ग्राह्यम्। तिक्तस्वादुभेदेन तच्च द्विविधम्, तत्र तिक्तमारण्यमेव प्रशस्तम्।

(५९) **पारिभद्रः**—हिः—फरहद। वाः—पालिधामादार, चोरपाल्ते। लोहितकुसुमः कण्टकितः नात्युच्चः वृक्षः। अस्य मूलत्वक् ग्राह्या। (६०) **प्रियङ्गुः**—गन्धप्रियङ्गुः कङ्गुश्च। कङ्गु काउन इति लोके, अत्र कङ्गुर्ग्राह्यः। (६१) **पृथ्विका**—कृष्णजीरकः। (६२) **प्रतिविषा**—अतिविषैव। अतिविषा आतइच इति लोके; क्षुद्रः कन्दः बहिर्मलिनः अन्तःशुभ्रः तिक्तास्वादः।

(६३) **फञ्जी** ( भार्गी )—हिः—भारङ्गी। वाः बामुनहाटी। शाखावर्ज्जितः गुल्मः। पत्राणि क्रमविन्यस्तानि। शाखाग्रे पुष्पं भवति। मूलं ग्राह्यम्। (६४) **वटाङ्कुरः ( सपिप्पलः )**—वटस्याविकसितं पत्रमुकुलम्। अश्वत्थस्य च तथा। (६५) **वन्धुजीवः**—हिः—दुपहरिया। वाः—बांधुलिफुल। (६६) **वरा**—त्रिफला। (६७) **वरुणः**—वाः—वरुणगाछ। उच्चैर्वृक्षः, त्रिपत्रं—पत्रपृष्ठं शुभ्रं, कोमलशाखायां रेखाकारं शुभ्रं लाञ्छनमस्ति। फलं क्षुद्रं कपित्थफलतुल्यम्। पुष्पकालोवसन्तः।

(६८) **वर्षाभूः**—श्वेतपुनर्नवा। समग्रः क्षुपः ग्राह्यः। इयं सदैवार्द्रा प्रयुज्यते। (६९) **बहुपुत्रा**—शतावरी। (७०) **वालकं**—सुगन्धिवाला। (७१) **वायसी**—काकमाची, काकोड़ुम्बरी वा। (७२) **विजया**—हरीतकी। (७३) **विशाला**—हिः—इन्द्रायन, बड़िइन्द्रायन। वाः—माखाल। फलं ग्राह्यम्। (७४) **वृषः**—वासकः। स च श्वेतरक्तपुष्पभेदेन द्विविधः। अत्र श्वेतपुष्पः ग्राह्यः। अयं सदैवार्द्रो प्रयोक्तव्या। (७५) **वेतसः**—हिज्जलसदृशो वृक्षः वेत्रात् पृथगेव। (७६) **वैदेही**—पिप्पली। (७७) **व्याघ्रीमूलं**—कण्टकारीमूलं। (७८) **ब्राह्मी**—जलासन्निधौ आर्द्रभूमौ वा जाता भूलुण्ठिता लता। पुष्पं क्षुद्रं शुभ्रवर्णं। पत्रं क्षुद्रं मांसलं तिक्तं। ग्रन्थिभ्यः मूलं निर्गच्छति।

(७९) **भद्रकाष्ठं**—देवदारु। (८०) **भृङ्गः**—भृङ्गराजः, मार्कवापरपर्य्यायः। आर्द्रभूमौ जलसन्निधौ वा जायते। स च पीतपुष्पः। श्वेतपुष्पस्तु केशराज

इति कथ्यते। **(८१) मदयन्तिका**—वनमल्लिका काठमल्लिकेति लोके। अस्या मूलं ग्राह्यम्। **(८२) मनःशिला**—पीतवर्णं पाषाणाकृति धातुविषम्। मन्छाल इति लोके। **(८३) मातुलुङ्गः**—टावालेवु इति लोके परिचयः दर्पणे द्रष्टव्यः। **(८४) मालती**—अस्याः काण्डः नरजङ्घातुल्यस्थूलो भवति। पत्रवृन्तं पत्रस्याः शिराश्च रक्तवर्णाः। वर्षासु पुष्पिता भवति। पुष्पं संख्यायां बहु, वर्णतः शुभ्रं, गन्धे मनोरमम् आकृतितः चुद्रं। प्रदोषे विकसति अतः सन्ध्यापुष्पेति नाम। मालती-कुसुमवासितप्रावारकः काव्यप्रसिद्ध एव।

**(८५) शिरीषमाषकः**—शिरीषवीजानि। **(८६) मुष्ककश्वेतः**—श्वेतपुष्प घण्टापारुलः। **(८७) मूषिककर्णी ( पर्णी )**—वाः—इन्दुरकाणीति वङ्गभाषानाम। **(८८) मेषशृङ्गी** - परिवेष्टिका लता। तिक्तदुग्धा इति प्रसिद्धा, पुष्पं पीतवर्णं। इयं वामावर्त्तेन आश्रयतरुं वेष्टयति, या तु दक्षिणावर्त्तेन वेष्टयति सा वृश्चिकाली विषाणिका वा। मूलं कटुलवणं, आकारतः अनन्तमूलवत्। **(८९) मोचरसः**—शाल्मलीनिर्य्यासः। वणिक्द्रव्यं। **(९०) यवनालक्षारः**—यवनालस्यान्तर्धूमदग्धोक्षारः। **(९१) रसाञ्जनम्**—एकं धातु रसाञ्जनं चिक्कणकृष्णं पाषाणाकृति खनिजद्रव्यम्। अपरं कृत्रिमरसाञ्जनं दार्व्वीक्काथोद्भवम्। अत्र कृत्रिमरसाञ्जनं ग्राह्यं। विपणिसुलभं कृत्रिमरसाञ्जनन्तु कङ्करादिसंयोगात् प्रयोगानर्हमेव। **(९२) राजद्रुमः**—आरग्वधः। **(९३) रास्ना**—रास्नाशब्देनाधुना यो वन्दाकः व्यवह्रियते सा तु न कदापि निघण्टुसम्मता रास्ना। **(९४) रोचना**—अश्मवत् कठिनीभूतं गोःपित्तं गोरोचनेति विख्याता। विपणिलभ्यायान्तु रोचनायां हरिद्राचूर्णादिकं मिश्रितमस्ति। **(९५) रोध्रः**—लोध्रद्रुमस्य त्वक्। स द्विविधः लोध्रः वल्कलोध्रश्च, तत्र लोध्रः रेचकः वल्कलोध्रश्च ग्राही। अत्र लोध्रः ग्राह्यः।

**(९६) लाक्षा**—अश्वत्थपर्कटादिवृक्षशाखायां कीटरचितो द्रव्यविशेषः। लाक्षारससिक्तं तूलकमेव अलक्तकेति कथ्यते। **(९७) शतपुष्पा**—सुगन्धि वीजं—शलुफा इति लोके। **(९८) शमी**—खदिरसदृशो वृक्षः। साँइकाँटा इति लोके। **(९९) शरपुङ्खः**—शारफोंका इति लोके। वननील इति वङ्गभाषा-

नाम। अस्य बहुवोभेदाः सन्ति। दर्पणे मृग्याः। (१००) **शिखिवर्हं**— मयूरपुच्छं।

(१०१) **शिग्रुद्वयम्**—रक्तपुष्प श्वेतपुष्पभेदेन शोभाञ्जनद्वयं। शोभाञ्जन सजिना इति लोके। (१०२) **शुकनासः**—श्योणाकः। स च दशमूलान्तर्गतः प्रसिद्ध एव। (१०३) **शृङ्गाटकः**—पाणिफल इति लोके। (१०४) **शृङ्गी**— कर्कटशृङ्गी—वणिकद्रव्यम्। विस्तरस्तु दर्पणे द्रष्टव्यः। (१०५) **श्वेता**— श्वेता गिरिकर्णिका। श्वेत अपराजिता इति लोके। (१०६) **श्लेष्मातकः**— बहुवारः लसोड़ा इति हिन्दि भाषानाम। (१०७) **श्यामा**—श्यामालता नाम दीर्घा परिवेष्टिका लता छिन्नायां चीरं स्रवति।

(१०८) **सर्पगन्ध**—अज्ञातः। (१०९) **सर्व्वगन्धः**—चातुर्जातक- कर्पूरककोलागुरुसिह्लकं। लवङ्गसहितञ्चैव सर्व्वगन्धं विनिर्द्दिशेत्। (११०) **समङ्गा**—वराहक्रान्ता। (१११) **सहे**—मुद्गपर्णी माषपर्णीच। (११२) **सारिवा**— अनन्तमूलं। (११३) **सिह्लकः**—सिन्दुवारः। (११४) **सुवर्चिका**— सूर्य्यावर्त्तः—हुड़हुड़े ति लोके। (११५) **स्नुही**—मनसा इति प्रसिद्धा। (११६) **सोमल्वक्**—वर्व्वूरत्वचः—वावला इति लोके। (११७) **सोमवल्ली**— वाकुचिः। (११८) **हरिताल**—पीतवर्णं पाषाणाकृति खनिजद्रव्यम्। तच्च पिण्डगोदन्तभेदेन द्विविधं। तयोः पिण्डं शिल्पे गोदन्तं भेषजेषु युज्यते।

---